हिन्दुस्थानं प्रति मम प्रत्यागमनोत्तरमेव मयावगतं यद्ब्रह्मचर्यं मानुषप्रयत्नादेव केवलमसाध्यमिति । तदवधि फलाहारेण विकारजातस्य समूलनाशो भविष्यति । नान्यत्किमपि कर्तुमावश्यकमिति स्वाभिमानाद्विश्वस्य तद्विश्वासमायायां लग्नोऽभवम् ॥

एतद्वृत्तान्तनिरूपकं प्रकरणमग्रे वर्तते । अद्य पुनरेतावन्मात्रं स्पष्टीकर्तव्यं यन्मोक्षसाधनाय ब्रह्मचर्यं रिरक्षिषुभिः स्वप्रयत्ने यावान् विश्वासो निधीयते तावान्भगवत्यपि निवेश्यते यदि प्रेप्सितभंगो नैव शङ्कनीयः । तथाहि भगवदुक्तिः —

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ भ. गी. २,५९

अत एव मुमुक्षोः श्रीरामनामैव श्रीरामकृपैव परमाश्रयः । भरतखण्डं प्रत्यागतस्यैव ममेदं तत्त्वं बुद्धिगोचरोऽभवत् ॥

## नवमोऽध्यायः

# सरलजीवनम्

मया तावदारब्धो भोगप्रधानो जीवनक्रमः । परंतु चिराय सैष नहि प्राचलत् । मन्दिरं महतावधानेन मया सज्जीकृतमासीत् । किन्त्वेतन्मदीयमानसं न ह्यकर्षत् । अथाहं गृहव्ययमल्पयितुं प्रवृत्तः । रजकाय प्रदेया भृतिर्वर्धते स्म । स तावद्वसनानि कालेनोपाहरत् । तस्माद्विंशत्यां त्रिंशत्यां वा कंचुकेषु गलपट्टकेषु स्थितेष्वपि न पर्याप्नुवन् । गलपट्टिकाः प्रतिदिनं आन्तरकंचुका एकाहव्यत्यासेन वा परिवर्तनीया ह्यासन् । एतेन मे द्विगुणो व्ययः संवर्तते स्म । ममैतन्न समञ्जसमित्यहमचिन्तयम् । तद् व्ययं रिरक्षिषुः स्वयमेव वस्त्रक्षालनमारप्सि । क्षालनविधानं कुतश्चित्पुस्तकादवबुध्य भार्यामप्यशिक्षयम् । एतेन यद्यपि कार्यस्य बाहुल्यमुपजातं तथापि तस्य नूतनोपक्रमादावयोरेतद्विनोदकरमेवासीत् ॥

गलपट्टिकायाः स्वयं निर्णेजनव्यतिकरः कदाप्यविस्मरणीयो भवति । मया किल सात्याधिककांजिकेन योजिताभवत् । घट्टन ( परिष्करण ) यन्त्रं प्रकामतापितं नासीत् । दहनशङ्कया गलपट्टिका सम्यक्घट्टिता नाभूत् । एतेन दृढस्तथापि पट्टिका सर्वदा कांजिकपिष्टं मुञ्चति स्म । ईदृशीमहं प्रतिमुच्य न्यायसभां गतः सहस्थितानां ब्यारिस्टरजनानामुपहास्यतामगमम् । तस्मिन्नपि काले परिहाससहनशक्तिर्ममासीत् ॥

अहमवोचम्—स्वयं गलपट्टिकाक्षालनस्यायमेव मे प्रथमोऽवसरः। अत एव कांजिकाधिक्यात् पिष्टमुद्गीर्यते किन्त्वनेन मम क्लेशः कोऽपि नास्ति। परं भवतां विनोदप्राप्तिरप्येको लाभ इति ॥

तत्रैकः सुहृदपृच्छत्—किमत्र रजका दुर्लभा इति ॥

अहमवोचम्—

इह निर्णेजकाय प्रदेयं द्रव्यं ह्यत्यधिकं मे प्रतिभाति। यावत् पट्टिकामूल्यं तावन्निर्णेजकव्ययो भविष्यति। किन्तु रजकस्याश्रयणं पदे पदे प्रसज्यते। तन्मन्ये स्ववस्त्राणां स्वेनैव क्षालनं वरमिति ॥

एतत्स्वावलंबनस्वारस्यं मदीयमित्राणि ग्राहयितुं नाशकम्। अथ क्रमेण कृतहस्तस्य रजकस्येव स्वकर्माणि नैपुण्यमहमभ्यगच्छम्। रजकानुष्ठितकार्यापेक्षया मदीयकार्यं न पर्यहीयत। दृढत्वे भास्वरत्वे च मदीयगलपट्टिका निर्णेजकधौतपट्टिकाभ्यः कथमपि नावरा अभूवन् ॥

दक्षिणाफ्रिकादेशमागतस्य गोखलेमहाशयस्य निकटे महादेव-गोविंद-रानडे-महोदयैः प्रदत्तमेकमुत्तरीयं स्थितम्। तदेतद् दातुः प्रज्ञापकं गोखलेमहाशयो यत्नेन नाभ्यरक्षत्। अपूर्वसंदर्भेष्वेव च तदुपायुंक्त। जोहानिसबर्गवर्तिभिर्भारतीयैस्तत्संमाननार्थमवकल्पितं भोजनसंतर्पणमप्येको विशिष्टावसर आसीत्। तदानीमेतदुत्तरीयं तैर्धारणीयमापतितम्। पुटितपुटितस्थितत्वात्तन्निर्णिज्य तप्तघट्टनेन परिष्करणीयमासीत्। रजकमाकार्य निर्णेजयितुमवकाशो नाविद्यत। स्वकौशलमुपयुञ्जानस्तत्कार्यमहं करिष्यामीत्यवोचम्। तदा गोखलेमहाशयोऽकथयत्। यथा—

"न्यायवादिकृत्यं भवद्भिः सम्यगनुष्ठीयत इत्यस्ति मे विश्वासः। किन्तु वो निर्णेजनपाण्डित्ये नाहं श्रद्धालुः। दूषितेऽमुष्मिन् का गतिः। उत्तरीयमिदं मया कियन्मूल्यवद्गण्यत इति ज्ञायते वेति ॥"

एवमाख्याय बहुमानत्वेन यथा बहुमानत्वेन तद्वस्त्रलाभः समुपानमत्तत्कथां परमोत्साहेन मह्यमुपावर्णयत्। तथाप्यहं यथावत्कार्यं करिष्यामीति सविनयं प्रतिज्ञाय तापनेन वस्त्रं परिष्कर्तुमनुज्ञामापम्। कृतकार्यश्च श्लाघावचनैरभ्यनन्दिषि। इदानीमखिलं जगदेव यद्यपि मदीयकौशलं नाङ्गीकुर्यात्तदा मे का वा क्षतिः ॥

यथाहं रजकाश्रयात्तथा नापितावलंबनादप्यात्मानं व्यमोचयम्। आंग्लविदेशं गन्तुमुद्यताः सर्वेऽपि स्वयं क्षौरविधानं शिक्षन्ते। तथापि स्वयं लोमलुञ्छनस्य शिक्षिता जनो नाद्यापि मया दृष्टः। मया तदपि शिक्षणीयमासीत्। अहमेकदा प्रिटोरियानगरे कस्यचिदांग्लनापितस्य कार्यालयमागच्छम्। मम केशलुञ्छनं न करिष्यामीति सोऽब्रवीत्। एवं प्रतिब्रुवाणेन प्रदर्शिता त्ववज्ञा वर्णयितुमशक्या भवति। अहं परमखिद्ये। तत्क्षणमेव विपणिं गत्वा केशलुञ्छनयन्त्र

क्रीत्वा दर्पणस्याग्रे स्थितः । स्वशिरोग्रभागस्य केशानलुञ्चि । किन्तु चरमभागस्य केशलुञ्छनं दुष्करमासीत् । तदेतन्नैव सुनिष्पन्नम् । न्यायसभायां सुहृदो मामवलोक्य परिहासमग्ना अभवन् । ननु गांधिमहाशय किं वृत्तं भवतः केशानाम् । तान्मूषकाः किमलुंपन् ॥

नहि गौरनापितः कृष्णशीर्षं मदीयं कथं वा स्प्रष्टुमर्हेत् । 'अतोऽहमसमीचीनतामनादृत्य स्वयमेव तानलुञ्चिषम् । प्रत्युक्तिरेषा न मे सुहृदामाश्चर्यमजनयत् । केशान्न लुञ्चिष्यामीति वदता नापितेन किमपि नापराद्धम् । कृष्णाङ्गानां केशलुञ्चने तस्य वृत्तिरेव विनाशमुपेयात् । न खलु वयमस्मदीयक्षौरकैः पंचमानामुपसर्पणमनुजानीमहे । ईदृग्भावनायाः फलं न तावत्सकृदेव परमनेकशोऽन्वभावि । अस्मदीयपापानामिदं प्रायश्चित्तमिति मन्वानो विषयेऽस्मिन्न तदानीं क्रोधमाकलयम् ॥

सरलतास्वावलंबनयोर्ममादरः शनैः शनैस्तीव्ररूपमापद्यतेति यथावसरं वर्णयिष्यते । किन्तु पूर्वमेवास्य बीजमवापि । तच्च रूढमूलं पुष्पितुं फलितुं च जलसेचनमात्रमप्यैक्षत जलसेचनं च काले प्राप्तमेव ॥

दशमोऽध्यायः

# बोअर-युद्धम्

आसप्तनवत्यधिकाष्टशतोत्तरसहस्रतमाद् नवनवत्यधिकाष्टशतोत्तरसहस्रतमं वत्सरं मदनुभवगोचरीभूतान् बहून्विषयान् विसृज्य सांप्रतं बोअरयुद्धस्य वृत्तान्त उपवर्णनीयो भवति । एतदायोधनस्य प्रारंभकाले बोअरजनैरेव सर्वात्मना सहानुभूतिरस्माकमासीत् । किन्तु स्वाम्यभिप्रायानुसारेण वर्तितुमद्याप्राप्तोऽहमिति ममासीत्तदानीं मनीषा । इदं दक्षिणाफ्रिकासत्याग्रहेतिहासेऽनुञ्झितहृदयसूक्ष्मपरामर्शेन मया सर्वमुपावर्णि । तस्मादस्य पुनर्निरूपणमत्र निरवकाशं भवति । एतद्वृत्तान्त बुभुत्सुभिः स एवेतिहासो द्रष्टव्य इति बोधयामि । इह तावदियन्मात्रमिदानीं वक्तव्यं यथा — आंग्लसाम्राज्यं प्रति ममासीद्यादृशी स्वामिभक्तिः सा तस्मिन्नायोधने ममाङ्ग्लपक्षमाश्रित्य प्रवर्तनाय बलवत्प्रैरयत् । आंग्लराज्यप्रजाधिकारोऽयं मया संपिपादयिषितस्तदांग्लप्रजावदेव ममापि तद्राज्यरक्षणे प्रवृत्त्याश्रयणं धर्म्यमित्यहमचिन्तयम् । तत्कालमहं हिन्दुस्थानस्य पूर्णस्वातन्त्र्यावाप्तिः 'ब्रिटिश' चक्राधिपत्य एव स्थित्वा तच्चक्राधिपत्यद्वारैव साध्येत्यभिप्रायवानासम् । अत एव यथाशक्यं मित्राणि संघट्य लब्धक्षतानां योधानां शुश्रूषणाय सेवादलमेकं पर्यकल्पयम् । एतद्दलस्य सेवां राज्याधिकारिणः स्वीकारयितुं महान् प्रयास आस्थेयोऽभवत् । तदा किल तत्रत्या आंग्लेयाः प्रायेण भारतीयान्सर्वानपि कष्टभीरुकान् स्वार्थैकपरायणांश्चामन्यन्त । अत एव

बहवो माङ्ग्लेयसुहृदः प्रयत्नं मदीयमनभिनन्दन्तो मां निरुत्साह्यांचक्रुः। डॉ. बूथमहाशयस्तावदेक एव सर्वात्मना मामपोषयत्। परिक्षतयोधानां शुश्रूषणस्य विधानमस्मानशिक्षयत्। एतत्कार्यनिर्वाहोचितशरीरदार्ढ्यसंपन्ना वयमिति भिषक् सकाशाद्योग्यतापत्रिकां वयं समपादयाम। एस्कम्बमहाशयो लॅटनमहाशयश्च प्रयत्नमेनं सोत्साहमन्वमोदेताम्। अथान्ते वयं युद्धे सेवां करिष्याम इति राज्याधिकारं प्रति विज्ञप्तिमकुर्महि। राज्याधिकृताश्च तद्विज्ञप्तिहेतोः स्वकृतज्ञतां प्रख्याप्याधुनैव सेवया न कार्यमित्यस्मानवेदयन्॥

किन्तु तदनङ्गीकारवाक्येन नाहं परितुष्य जोषमवास्थिषि। डॉ. बूथमहाशयस्य साहाय्यमुपलभ्य नातालदेशवर्तिनं क्रैस्तमताचार्यमदर्शम्। आस्माकसेवादले बहवो भारतीया क्रिस्तमतावलंबिनोऽवर्तन्त। ममोपदेशमाकर्ण्य मताचार्यः परं समतुष्यत्। राज्याधिकारेणास्मदीया सेवा यथा स्वीक्रियेत तथाहमुपकरिष्यामीति च प्रत्यजानीत॥

एतन्मध्ये कालस्याप्यनुकूलसंयोगोऽस्माभिर्लब्धः। बोअरयोधा अवितर्कितं धैर्यं स्थैर्यं विक्रमं च प्रादर्शयन्। अथ राज्याधिकारोऽस्मदीयसेवाया आवश्यकतामपश्यत्॥

आस्माकसेवादलमेकशतोत्तरसहस्रसंख्याकमासीत्। तत्र नेतार उपचत्वारिंशज्जनाः। त्रिशतं स्वतंत्रभारतीयाः शेषाः प्रतिज्ञाबद्धकर्मकराः। डॉ. बूथमहाशयोऽपि सहास्माभिरेव स्थितः। सेवादलं स्वकार्यं श्लाघ्यतया निरवाहयत्। यद्यप्यस्मदीयकार्यं शतघ्नीप्रहारक्रान्तिविदूरे प्रदेशे निर्वर्तनीयमासीत्। यद्यपि वयं 'रक्तस्वस्तिक' ( रेड क्रॉस ) बन्धेन समरक्षिप्महि तथापि प्रतिबद्धसंधिमार्गे समयेऽस्माभिराग्नेयगुलिकापातस्थल एव सेवाकृत्यमनुष्ठेयमित्यादिक्ष्महि। गुलिकपातस्थलप्रवेशनिषेधको यो नियमः सोऽस्मदिच्छया न प्रयुक्तः किन्तु राज्याधिकार-निदेश एव तादृशोऽभूत्। तथापि स्पियांकोपे पराजयप्राप्त्यनन्तरं परिस्थितिरन्यथा समजनि। तथाहि सेनापतिर्बुलराभिधानः संदेशं व्यसृजद्यथा—यद्यपि यूयं विपद्गोचरे स्थातुमनर्हाः तथापि समराङ्गणं प्रविश्य परिक्षतयोधानानयथ चेत्तदा राज्याधिकारस्य महती युष्माभिरुपकृति-र्विहिता स्यादिति। विपद्गोचरीभवितुं वयं सज्जा एव स्थिताः। तस्मात् स्पियांकोपयुद्धे शतघ्नीप्र-हारान्तःपातिषु प्रदेशेषु गत्वा कार्यं कर्तुमारभ्महि। एषु दिवसेषु परिक्षतान्योधान् वीवधैर्वहन्तो वयं विंशत्या पंचविंशत्या वा पाषाणैर्दवीयसः प्रदेशानत्यलंघयामहि। इत्थमस्माभिरपोढानां योधानां मध्ये जनरलवुडगेटप्रभृतयो जना अविद्यन्त॥

सप्ताहषट्कं यावत्कृतायां सेवायामस्मदीयदलो व्यसर्जि। स्पियांकोपवालक्रान्झस्पथलयो-र्लब्धपराजयाः प्रधाना आंग्लसेनापतयो बोअरजनावस्कन्दात् लेडीस्मिथप्रभृतिस्थलानां सद्यो

विमोचनप्रयत्नं विहाय हिन्दुस्थानादांग्लविदेशाच्च सैन्यागमं प्रतीक्षमाणैरस्माभिः समुद्योगो विलंब-नीय इति निश्चिक्युः ॥

इमामल्पामपि सेवां तस्मिन्नवसरे बहु प्राशंसिषुः । भारतीयेषु माननावृद्धिमापत् । 'सर्वेषामपि नः समा हि मतिता साम्राज्यसत्पुत्रता' इति पल्लवीयुतानि प्रशंसनपद्यानि सर्वतः प्राचकाशन् ॥

बुलरमहाशयः सेनापतिलेखनद्वारास्मदीयदलस्य सेवाकार्यमस्तौषीत् । दलनायकेभ्यः समरविरुदमुद्रा अपि प्रादायिषत ॥

भारतीयः समवायः परंतु संघटितः समवर्तत । प्रतिज्ञाबद्धकर्मकरान् भारतीयानहं सम्यक्तरां पर्यचैषम् । तेषामतिशयिता जागर्तिरुदपद्यत् । हिन्दुमुसलमानक्रैस्तमद्रासीगुजराती-सिंधीजनाः सर्वेऽपि भारतीया एव सर्वे च मातृभूमेर्भरतवर्षस्य पुत्रा इति भावना बलवत् दृढ-मूलाभवत् । भारतीयानां क्लेशाः सर्वेऽपि सर्वथा दूरीभविष्यन्तीति सर्वोऽप्यमन्यत । गौराङ्गानां वर्तनमपि परिवृत्तिमागतमिव स्पष्टमलक्ष्यत । युद्धकाले गौराङ्गैः सह घटितः संबन्धोऽपि मधुर एवासीत् । परःसहस्रैरांग्लयोधैः सह सङ्गो नः समजनि । तेऽस्मासु केवलं मित्रभावेनाव-र्तन्तापि तु तत्सेवार्थमागता वयमित्यस्मदीयामुपकृतिं संस्मरन्ति स्म ॥

विपत्सु मानुषी प्रकृतिः यथा परमोत्कर्षमाविष्करोतीति निदर्शनार्थमेका मधुरसंस्मृति-रिहावश्यमुपन्यसितव्या भवति । चीवलीसंज्ञकं सेनानिवेशस्थानमस्माभिर्गम्यते स्म तत्रैव लॉर्डरॉबर्ट्समहाशयस्य कुमारो 'लेफ्टनन्ट रोबर्ट्स' नामा मृत्युसंनिभेनाग्नेयगुलिकाप्रहारेण पञ्चतामगात् । प्रेतकार्यनिर्वहणसंमानोऽस्मानुपनतः । अस्मदीयप्रयाणदिवसे नैदाघमौज्वल्यं समधिकमासीत् । वयं सर्वेऽपि तृष्णार्दिता अभूम । मार्गे क्षुल्लका स्रोतस्विनी काचिदलक्ष्यत । जलपानेन पिपासोपशमनं सुकरमासीत् । किन्तु प्रथमं केन पातव्यम् । आंग्लयोधेषु पीत-तृप्तेषु वयं च पास्याम इत्यस्माभिः सूचितम् । परंतु ते प्रथमं पातुमप्रतिपद्यमानाः पूर्वमस्मानेव पानाय निरबध्नन् । कंचित्कालमित्थं पौर्वापर्यजिज्ञासा प्रावर्तत ॥

## एकादशोऽध्यायः

# नैर्मल्यसुधारणं क्षामनिवारणं च

**समाजाङ्गस्यानुपयुक्तस्थितिनिरूपणं** सर्वदा मे दुस्सहं भवति । जनतादोषनिगूहनं वा तद्दोषापनयनमन्तराधिकारप्राप्तये संघर्षणं वा नाहं मोचयामि । अत एवाहं नातालदेशे स्थितिग्रहणादारभ्य दक्षिणाफ्रिकानिवासिषु भारतीयेष्वारोपितं दोषं (एतदारोपणमीषत्सत्यां-

शोपेतमासीत्) अपाकर्तुमुद्यतोऽभवम्। एवं हि प्रवादः श्रूयते स्म। यथा–"भारतीया अलसाः। ते स्वकीयगृहद्वाराणि निर्मलानि न हि स्थापयन्ति। श्वपचा एते" इति ॥

एतत्कलंकनिर्मूलनोद्देश्यतयास्मदीयजनप्रमुखानां गृहेषु पूर्वमेव सुधारणमारब्धमासीत्। किन्तु डरबननगरे ग्रन्थिज्वरप्रसरेणाशंका यदा समुदैत्तदा प्रतिगृहं परीक्षितुमुपाक्रंस्महि। पौरसभासदस्यैः सह संमन्त्र्य प्राप्तानुमतिभिरस्माभिः कार्यमारंभि। ते किलास्मत्सहकारमपैक्षन्त। अधिगतास्मदीयसहायानां तेषां कार्यं सुकरमजनि। आस्माकं (भारतीयानां) क्लेशास्तानचमापद्यन्त। यतो ग्रन्थिज्वराद्युपद्रवेषु समुत्थितेष्वधिकारिणः प्रायेणास्तमितक्षमागुणाः सुदुर्घटान्सन्नाहानावचय्य निजक्रोधपात्रीभूताञ्जनान् दण्डयन्ति। अस्मदीयास्तु स्वयं परिक्रम्य नैर्मल्यकार्यं निर्वाह्य संकटादात्मानमरक्षन् ॥

मदीयानुभवेषु सर्वं न मधुरमासीत्। तत्रत्यराज्याधिकारात्स्वाधिकारप्रार्थनाय भारतीयानां साहाय्यमवाप्तुं सुकरमासीत्। तथापि स्वकर्तव्यस्य स्वयं विधानप्रसङ्गे तत्साहाय्यं दुर्लभमलक्ष्यत। ते मां क्वचिदपामानयन्। क्वचित्सविनयमौदास्यमदर्शयन्। स्वममितःस्थलस्य निर्मलीकरणक्लेश एव तेषां दुस्सहोऽभूत्। तस्मात्का कथा प्रसक्तकार्यस्य कृते द्रव्योत्सर्जनस्य। जनैः किमपि कार्यं कारयितुकामेन निरवधिकक्षमासंपन्नेन भवितव्यमित्युपदेशो मदनुभवैरेतैः सम्यङ्मया शिक्षितोऽभूत्। सुधारणसिद्धिसमुत्सुको जनः सुधारक एक एव। तेन च समाजद्वेषापमानप्राणान्तिकहिंसाः फलत्वेन प्रतीक्षणीयाः। न पुनरन्या कापि प्रत्याशा मनसि निधेया। सुधारको यद्यपि सुधारणं प्राणवत्प्रियं मन्यते तथापि समाजेन व्यतिक्रमोऽयमिति कुतो न मन्तव्यम् ॥

अथाप्येतत्प्रयत्नकलापाद्यः फलितोंऽशः स कथ्यते। तत्रत्या भारतीयाः स्वगृहद्वारादिकस्य स्वच्छतयावस्थापनमावश्यकमित्यज्ञासिषुः। अधिकारिणां मयि गौरवमुपाचीयत। ते किलाभ्यजानत यदहं बहिरस्मदीयन्यूनातिरिक्तानि प्रकाश्य स्वाधिकारस्य कृते यथैकान्ततो युध्यमानः स्थैर्यमवलम्ब्य स्थितस्तथैवान्तः सुधारणस्य कृतेऽपि स्थैर्योत्साहसंपन्नोऽभूवमिति ॥

किन्तु कार्यमन्यदवाशिष्यत। तच्च तत्रस्थानिनां भारतीयानां निजमातृभूमिं प्रति स्वकर्तव्योपदेशः। भरतवर्षमनाढ्यभूमिः। भारतीया अर्थार्जनाय दक्षिणाफ्रिकादेशं गताः। एवमर्जितादर्थात्कियतोऽप्यंशस्य विपन्नमातृभूम्यै प्रदानं तेषां कर्तव्यम्। सप्तनवत्युत्तराष्टशताधिकसहस्रतमे क्रैस्ताब्दे नवनवत्युत्तराष्टशताधिकसहस्रतमेऽपि वत्सरे च घोरक्षामरूपया विपदा भरतखंडमाक्रम्यत। द्वयोरप्यवसरयोर्दक्षिणाफ्रिकादेशात्साहाय्यमुपानमत्। प्रथमक्षामे संग्रहीतद्रव्यापेक्षया द्वितीयवारमधिकतरं द्रव्यं समग्राहि। तत्कालमाङ्ग्लेभ्योऽपि साहाय्यममृगयामहि। तस्मादर्थसञ्चयः प्रभूतोऽभवत्। गिरिमिटियाख्याः प्रतिज्ञाबद्धकर्मकराश्च स्वदेयांशमददुः।

इत्थमनयोर्दुष्कालयोरारब्धोऽयमभ्यासोऽद्यावधि स्थायी वर्तते। भारतवर्षे सार्वजनिकसंकटप्राप्तौ दक्षिणाफ्रिकावासिभारतीयेभ्यः साहाय्यं प्रकाममुपनमत्येव॥

दक्षिणाफ्रिकादेशे भारतीयसेवासमुद्यतस्य मम सत्यमहिमा पदे पदे प्रत्यक्षीभवति स्म। सत्यमेको विशालस्तरुः। स च प्रकामपोषितः सन् प्रकामं फलिष्यति। सत्यखनौ यथा यथान्तरवतीर्यते तथा तथा महार्हरत्नानि हस्तमुपागच्छन्ति सेवाया विविधोऽवकाशश्चोपलभ्यते॥

## द्वादशोऽध्यायः

# हिन्दुस्थानं प्रति निवृत्तिः

**युद्धव्यतिकरान्निवृत्तोऽहमचिन्तयम्**। यदितः परं मम कार्यं स्वदेशे वर्तते। न तु दक्षिणाफ्रिकादेश इति। एतच्च दक्षिणाफ्रिकादेशे कर्तव्याभावान्न। परन्तु द्रव्यार्जनमेव मम मुख्योद्योगो माभूदिति॥

भरतखंडवर्तिनो मे सुहृदः प्रत्यागमनाय मां निरबध्नन्। तत्र मदीयगमनेनाधिकप्रयोजनलाभः स्यादित्यहमप्यचिन्तयम्। दक्षिणाफ्रिकादेशे कार्यनिर्वहणाय खानमहाशयो मनसुखलाल-नाजर-महाशयश्च स्थितावेव। अतोऽहं प्रस्थानाय मदीयसहचरानपृच्छम्। तदनुमतिप्राप्तिस्तु बहुप्रयाससाध्याभवत्। मम प्रस्थानादेकवत्सराभ्यन्तर एव पुनरागमनं जनैरपेक्ष्यते यदि तदा सद्यः प्रत्यागन्तुं सज्जस्थितेन मया भवितव्यमिति समयपूर्वकगमनमन्वज्ञासिषुः। समयबन्धोऽयं मम कठिनः प्रत्यभात्। तथापि प्रेमपाशबद्धोऽहमिमं प्रत्यपत्सि॥

गोवर्धनधरेणाहं स्वामिना प्रेमसूत्रतः नीतास्मि बन्धनं यस्माद्दासी तस्यास्मि सर्वदा—इति श्रीमत्या मीराबाईमहाशयाः वाचौपम्यं मदीयस्थितेः समञ्जसमासीत्। प्रजावाण्येव हि पारमेश्वरी वाक्। मम मित्रवाक्यमनिराकरणीयमासीत्। अतोऽहं समयमङ्गीकृत्य हिन्दुस्थानं प्रयातुमनुज्ञामवापम्॥

अस्मिन्नवसरे परं नातालदेशेन मम निकटसंबन्ध आसीत्। तत्रत्या भारतीयाः प्रेमामृते मामाप्लावयन्। स्थले स्थले ममापृच्छनाय सभा हि गिलिताः। महार्हाश्चोपदा मे प्राददुः॥

पुरा षण्णवत्युत्तराष्टशताधिकसहस्रतमेऽपि वर्षे हिन्दुस्थानं प्रस्थास्यमानेनैवंविधा प्रीतिदाया मयालभ्यन्त। परन्त्ववसरेऽस्मिन्विसर्जनसमारंभो महत्तर आसीत्। प्रीतिदायेषु न केवलं सौवर्णराजताश्च पदार्था अपि तु वज्रघटितान्यपि वस्तून्यविद्यन्त॥

एतानि वस्तूनि स्वीकर्तुं को वा ममाधिकारः। तानि मया स्वीक्रियन्ते यदि प्रतिफल-मन्तरेण लोकसेवां चिकीर्षोर्मम कथं वा चेतः समाधीयेत। मदीयव्यवहारिलोकैर्वितीर्णान्प्रीति-दायान्मुक्ताः शेषाः सर्वेऽपि प्रजासेवार्थमेव प्रदत्ता आसन्। किं च व्यवहारिणामितरमित्राणां च भेदमाकलयितुं नावकाश आसीत्। यतो मदीयकार्यिकाः सर्वेऽपि सार्वजनिककार्येषूपकर्तार एवासन्॥

एतेषां प्रीतिदायानां मध्ये पंचाशद्गिनी (अष्टशतरूप्यक) मूल्यः सौवर्णहार एकः कस्तुरबाईमहाशयार्थे वितीर्ण आसीत्। किन्तु तस्यापि मदीयसार्वजनिक सेवासंबंधवशादेवो-पलब्धत्वादितरेभ्यः पृथक्कर्तुं नायुज्यत॥

बहुमानप्राप्तिदिवसे रात्रौ नाहं न्यद्रासिषम्। योचनापरवशः सन् इतस्ततः कोष्ठे गता-गतमकरवम्। तथापि प्रतिपत्तिमूढोऽस्मि स्थितः। परःसहस्ररूप्यकमितमुपहारं दुस्त्यजमलक्ष्यत। तस्य स्थापनं तु ततोऽपि दुष्करं प्रत्यभात्॥

अहं तावदमूनि वस्तूनि स्ववशे स्थापयेयम्। परं मदीयदारापत्यानां का गतिः। अमी हि सेवयैव जीवितं यापयितव्यमिति मया शिक्ष्यन्ते स्म। सेवाया इतर प्रतिफलाभावस्तदीयबुद्धि-गोचरी क्रियते स्म॥

अस्मद्गृहे महार्हवस्तूनि नैव स्थितानि। अस्मदीयजीवितमंजसा सरलसरलं समपद्यत। एवं स्थितेऽस्माभिः सुवर्णघटिकायंत्राणि कथं धारणीयानि। आभरणभ्रान्तिर्दूरीकरणीयेति तदानीमपि लोको मया बोध्यते स्म। मया प्राप्तै रत्नाभरणवस्तुभिः किं करणीयम्॥

इमानि वस्तूनि सर्वथा न परिग्रहितव्यानीति निश्चैषम्। लोकानां कृते तद्रक्षणाय पारसी-रुस्तमजीप्रभृतीन् लोकान् धर्मदर्शित्वेन नियुज्य लेख्यमकरवम्। श्वो भूते भार्यापुत्रांश्च संमेल्य तैर्मन्त्रयित्वा चिन्ताभारनिर्मुक्तोऽभवम्॥

प्रस्तावेऽस्मिन्भार्या संमतेः दुर्ग्रहत्वं कुमाराणामप्रतिबन्धवत्वं च मम विदितमेवासीत्। तस्मादिमे बालका मत्पक्षवादिनः कर्तव्या इति निरचैषि॥

बालका मदीयसूचनां सद्य एवाङ्गीचक्रुः। तेह्यवोचन्—

एतैर्महार्हबहुमानैर्न हि नः कार्यमस्ति। तानि प्रदातृजनेभ्यः प्रत्यर्पणीयानि। यदि तावदीदृंशि वस्तून्यपेक्ष्यन्ते तदा स्वयं तानि क्रीणीमहीति॥

अहं सन्तुष्टस्तानपृच्छम्—एवं तर्हि युष्मदीयमाताप्येतदङ्गीकार्या नन्विति॥

ते प्राहुः—अवश्यमेव। तदभ्युपगमनभारस्तावदस्माकमस्तु। किमेतान्याभरणानि तथा धारयितव्यानि। सा किलास्मदर्थमेव तेभ्यः स्पृहयते। अस्माभिरेतेषु निहासितेषु किमित्यनया तत्परिग्रहेऽभिनिवेष्टव्यमिति॥

परमेतत्सुवचं न तावत्सुकरमासीत् ॥

मम भार्यावादीत्—भवतस्तावदिदं न स्पृहणीयं स्यात् । भवदीयकुमाराश्च नेदमपेक्षेरन् । ते प्रोत्साहिता भवद्वाक्यमनु नरीनृत्यन्ते । मयापि न धारणीयमित्यस्यार्थमप्यहं जानीयाम् । परं मम स्नुषाणां का गतिः । तासामप्येतदनपेक्षणीयं वा । श्वस्तावत्किं नु भावीति को हि विद्यात् । एतादृशान् प्रीतिदायान्नाहं सर्वथा प्रत्यर्पयेयमिति ॥

एवं वाग्धारा तदनु पोषिणी नेत्रांबुधारापि च प्रावहत् । तथापि बालका, वज्रमनस्काः स्थिताः । अहं तु निष्कम्प एव ॥

अथैवं मृदूक्तिभिस्तामवोचम्—युज्यते । पुत्राणां विवाहः कार्य एव । परन्तु बालवयसस्तान्विवाहयितुं नाहमिच्छामि । वयः प्राप्य तदेतत्सर्वं स्वयमेव ते निर्वोढारः । किं च रत्नाभरणगृध्नूः कन्यास्तदर्थं वयं न वृणीमहे । अथ कियन्तिचिदाभरणानि अवश्यमेव कारयितव्यानि चेत्तदा त्वहं पलायिष्ये । त्वं मां प्रक्ष्यस्येवेति ॥

भार्या प्रत्यवोचत्—

किं नाम प्रष्टव्यम् । न खलु भवान्मे न विदितः मदीयमाभरणसर्वस्वं भवता विनाशितम् । मया तद्धारणमसहमानो भवान् ननु स्नुषाणां पुनस्तान्युपहरिष्यति । अद्यप्रभृत्येव बालकानवधूतान्कर्तुं व्यवसितो भवान् । ननु सर्वथा नाहमाभरणानि प्रत्यर्पयिष्ये । मम हारस्योपरि भवतः को वाधिकार इति ॥

अथाहमपृच्छम्—

हारोऽयं भवत्कृतायाः सेवाया कृते प्रादायि किं वा मत्कृतसेवाया इति ॥

"तत्तावद्युज्यते । भवत्कृतसेवाया मयापि सेवा कृता स्यादिति मन्ये । भवतः कृते रात्रिंदिवं मया यत्परिश्रान्तम् । तद्भवत्कृतसेवा ते न गणनामर्हति तदानीममुकामुकान् स्वैरमेव गृहमानयन् मां रोदं रोदं परिश्रमय्य च परं प्रैष्यमकारयद्भवान् । हन्त सर्वस्यास्य गणना कुतः संभवेदिति ॥

इमे बाणास्तीक्ष्णा अभवन् । तेषां केचिद्बलवन्मां प्राहरन् । तथापि रत्नाभरणानां प्रत्यर्पणस्य मया पूर्वमेव निश्चितत्वात्कथंकथमपि भार्यामसान्त्वयम् । यानि मया षण्णवत्युत्तराष्टशताधिकसहस्रतमे वत्सरे लब्धानि रत्नाभरणवस्तूनि तानि प्रत्यार्पयम् । धर्मदर्शिलेख्यमेकं कृत्वा वा धर्मदर्शिनां वा लेख्यानुसारेण सार्वजनिककार्येषु यथासंभवं तेषां विनियुज्यतां नियम्य क्वचिद्द्रव्यनिक्षेपालये तान्यक्षेपयम् । अनेकशः सार्वजनिककार्येष्वावश्यकतां प्राप्य यद्यप्यहमेतानि वस्तूनि विक्रीतुं सज्जस्थितस्तथापि तन्निरपेक्ष एव पुष्कलधनं संग्रहीतुमशकम् । अद्यापि तदेवापद्धनं तिष्ठति । अपि चैतदुपचीयमानं वर्तते ॥

एवं कृतवतो मम न कदाप्यनुत्साहोऽजनि। गच्छत्सु दिवसेषु मम भार्यापि तदौचित्यमजानात्। इदमस्मान् बह्वीभ्यो दुराशाभ्यस्समरक्षत् ॥

सार्वजनिकसेवासमुद्यतैर्महार्हबहुमानानि नैव स्वीकर्तव्यानीति दृढं मे मतम् ॥

त्रयोदशोऽध्यायः

# पुनश्च हिन्दुस्थाने

इत्थमहं स्वदेशं प्रति प्रस्थितः। मार्गे 'मोरीश्यस'-द्वीपः प्राप्यत। तत्र नौकायानस्य चिरायावस्थानादवकाशमुपलभ्यावतीर्णस्तद्द्वीपस्य स्थितिगतीः प्रायः सम्यगेवाज्ञासिपम्। तत्रत्यराजकीयप्रतिनिधेः 'सर चार्ल्स ब्रस' महोदयस्य प्राघुणीभूय रात्रिमेकामत्यवाहयम् ॥

हिन्दुस्थानं प्राप्य कतिचिद्दिनानि देशपर्यटनेनायापयम्। तदानीमेकोत्तरनवशताधिकसहस्रतमो वत्सरः। तद्वर्षस्य राष्ट्रमहासभा कलकत्तानगरेऽधिनिवेष्टन्यभूत्। दीनशा-एदलजी-वाच्छा (इदानीं 'सर' बिरुदधारी) महाशयेनाध्यक्षतापदमास्थेयमासीत्। अहमपि महासभामगच्छमिति न पृथग्वक्तुमावश्यकम्। अयमेव मे महासभायाः प्रथमोऽनुभवः। मोहमयीनगरात् सर-फिरोजशा-महेता-महाशयेनोपस्थितधूमशकट्यैवाहमपि प्रास्थिषि। यतस्तेन सह दक्षिणाफ्रिकादेशस्य स्थितिमधिकृत्य वक्तव्यं स्थितम्। स तावत् पृथगेकां शकटीं भाटयित्वा प्रयाणमकरोत्। राजवैभवेन जीवनमसौ निर्वाहयति स्मेति मम विदितमासीत्। प्रयाणमध्ये कंचित्कालं तदीयशकटीं प्रविश्य मया संभावितव्यमिति प्राप्तानुज्ञस्तदनुरोधेन तन्निर्दिष्टे लोहाध्वनिवेशने तस्य शकटीं गत्वा तमवालोकयम्। तदानीं वाच्छा-महाशयः श्रीमान् (अद्य 'सर' बिरुदधारी) चिमनलाल-सेतलवाड-महाशयश्च तेन सहोपविष्टावास्तम्। सर्वेऽप्येते राजकीयप्रस्तावांश्चचयन्ति स्म। सरफिरोजशामहाशयो दृष्टमात्रं मामकथयत्। गान्धे तव कार्यमुद्दिश्य न किंचित्कर्तुं शक्यत इति प्रतिभाति। त्वदिष्टानुरोधेन प्रस्तावं तावदङ्गीकुर्महे। किन्तु स्वदेशेऽप्यस्माकं कियानधिकारः। स्वविषय एव यावदधिकारोऽस्माकं न चलति तावत्त्वास्थ्यवर्तिनामस्मदीयानामवस्थापरिवर्तो दुर्लभ इति। अहमेतेन विस्मितानुतप्तोऽभवम्। अयमाशयः सेतलवाडमहाशयस्याभिमत एवालक्ष्यत। वाच्छामहोदयः सानुकम्पां दृष्टिं मयि व्यकिरत्। सरफिरोजशामहाशयं मदीयमतमङ्गीकारयितुमहं प्रायतिषि। नामतो राजत्वाभावेऽपि कार्यतो मोहमयीनगरस्य परिवृढत्वमधिगतस्य तस्याङ्गीकृतिं मादृशो जनः कथं संपादयेत्। तदहं महासभायां मदीयप्रस्तावोपस्थापनं तेनाभ्यनुज्ञातस्तावतैव समतुष्यम् ॥

प्रस्तावपत्रमारोप्य मे प्रदर्शयन्तु भवन्त इति वाच्छामहोदयो ममोत्तेजनप्रदित्सयाकथयत् । तस्मादहं मदीयकृतज्ञतां प्रख्याप्याव्यवहितोत्तरलोहाध्वनिवेशनस्थितायां धूमशकट्यां ततोऽवितीर्य स्वशकटीमगच्छम् ॥

अथ कलकत्तानगरं वयमासादयाम । सभाध्यक्षः स्वागतमण्डल्या विभवोत्तरवसतिमनायि । मया कुत्र गन्तव्यमिति स्वयंसेवकमहमपृच्छम् । स मां रिपनमहाविद्यालयमनैषीत् । तत्र हि बहूनां प्रतिनिधीनां वसतिः परिकल्पितासीत् । मयाध्युषितविभाग एव मदीयभाग्यवशात्तत्रभवान् लोकमान्योऽप्यवर्तत । स च मदागमनादेकदिनोत्तरं तत्र प्राप्त इति स्मरामि ॥

निसर्गतो लोकमान्यस्य संनिधौ जनास्थानी सर्वदा वर्तते स्म । स च प्रदेशस्तत्रोपविष्टजनसमाज इत्येतत्सर्वं स्फुटं मे स्मृतिपथे वर्तते । यद्यहं चित्रकरोऽभविष्यं तदा मंचोपविष्टं तत्रभवन्तमचित्रयिष्यम् । तद्दर्शनार्थमागतेष्वसंख्येषु जनेष्वेकस्यैव नाम मयाद्य स्मर्यते । स च "अमृत बझार" पत्रिकासंपादको मोतीलालघोषमहाशयः । लोकमान्यस्य 'हा हा' प्रहासा राज्याधिकृतानामन्यायवर्तनमधिकृत्य प्रवृत्तस्तयोरालापश्च दुर्विस्मरो भवति ॥

अथ तत्रत्यानि संविधानानि सविस्तरं परिशीलयिष्यामः । स्वयंसेवकाः परस्परं प्रतिबन्धमाचरन्ति स्म । कश्चिदेकस्मिन्कर्मणि नियुज्यमानःसद्य एवापरमाह्वयत् । स चान्यं स चान्यम् । एतन्मध्ये हन्त प्रतिनिधीनामवस्था त्वनिर्वचनीयासीत् ॥

कतिभिश्चित्स्वयंसेवकैरहं मैत्रीमकलयम् । तेभ्यो दक्षिणाफ्रिकासंबन्धिनः कांश्चिद्वृत्तान्तान् न्यवेदयम् । एतेन ते मनागजिह्युः । सेवायास्तत्त्वमेतान् बोधयितुमयतिषि । ते च तत्प्रायेणाबुध्यन्तेव । तथापि सेवा पानके निक्षिप्य प्राशयितुं न शक्यते । प्रथमं तावदिच्छा ह्यावश्यकी । ततोऽभ्यासः । ऋजुचेतसामेषामिच्छा प्रकाममासीत् । परं शिक्षणमभ्यासश्च कुतो लभ्येत । महासभा प्रतिवत्सरं त्रीणि दिनानि प्रचल्य ततो निद्रामभजत् । दिनत्रयं प्रचलति वार्षिकोत्सवे कियन्मात्रं ज्ञानमुदियात् । प्रतिनिधयोऽपि स्वयंसेवकानुरूपा एवासन् । तैर्लब्धं शिक्षणमपि तत्सदृशमेव तात्कालिकमेव च । ते स्वयं न किञ्चिदकुर्वन् । इदं कुरु—अदः कुर्विति सर्वदा स्वयंसेवकानाज्ञापयन्ति स्म ॥

अत्राप्यस्पृश्यतायाः साम्राज्यविलासः प्रत्यक्षीभवति स्म । द्राविडानां पाकशाला शालान्तरेभ्यो दवीयसिप्रदेशे संनिविष्टाभूत् । इमान्प्रतिनिधीन् दृष्टिदोषः स्पृशति स्म । ( द्राविडदेशजा ब्राह्मणाः भोजनवेलायां इतरवर्णैर्दृष्टमात्रा अपि मालिन्यमाप्नुवन्ति । अत एव ते स्वगृहेषु बद्धकवाटा भुञ्जते ।) तस्मादेषां कृते महाविद्यालयस्यावरणान्तरे किलिंजकभित्तिभिः संवृता भोजनशाला पृथक्कल्पनीया भवेत् । सा च श्वासप्रतिरोधिना धूमजालेन परिपूर्णाभूत् । सैव पाकशाला सैव भोजनशाला सैव मज्जनशाला च । ततो बहिर्निर्गन्तुमवकाश एव नासीत् । सर्वमेतत्पश्यतो ममैते वर्णाश्रमधर्ममुपहसन्त इव लक्ष्यन्ते स्म । नानादिग्भ्यः समागत्य महासभायां

मिलस्तु प्रतिनिधिष्वेवैतादृगस्पृश्यताप्रसंगो यदि दृश्येत तदा तान्वृत्वा प्रेषितवत्सु जनेषु तया कियन्मात्रतया भवितव्यमित्यात्मन्येवाचिन्तयम् । इदं च स्मारं स्मारमहं दीर्घनिश्वासममुचम् ॥

मलीमसत्वं तु दुरन्तमासीत् । परीक्ष्यमाणे सर्वतः कच्चरमेव । मलागाराण्यल्पान्येवाविद्यन्त । दुर्गन्धं स्मरतो ममाद्यापि रोमहर्षो जायते । इदमहं स्वयंसेवकेभ्यः प्रादर्शयम् । ते तु विहस्य निःसंकोचमवदन्तदेतन्मलशोधकस्य कार्यं न पुनरस्माकमिति । एका शोधनी मे प्रदीयतामित्यहमपृच्छम् । ते मन्मुखमपश्यन् । अहमेकां मार्जनीं संग्रथ्य मलागारमशोधयम् । किंतु मय्येव तद्विश्रान्तिमगच्छत् । जनस्तोमस्यातिबाहुल्यान्मलागाराणामत्यल्पीभवनाच्च तानि वारं वारं संमार्जनीयान्यासन् । इदं मदीयशक्तिमतिक्रान्तमासीत् । तस्मान्मया स्वानुकूल्यमात्रमवेक्ष्य संतोष्टव्यमापतितम् । शेषास्तदशुचिलं दौर्गन्ध्यं च नालक्षयन्त ॥

परं नैतावदेव । केचित्प्रतिनिधयः स्वकोष्ठस्य बहिर्वेदिकामेव रात्रौ मलविसर्जनस्थानं निःशङ्कमकुर्वत । प्रातरिदं स्वयंसेवकेभ्यः प्रादर्शयम् । शुचीकर्तुं न कोऽपि सज्जस्थितः । अहमेक एव तन्निर्मलीकरणमानपात्रमासम् । इदानीमत्रविषये महती व्यवस्थितिर्दृश्यते । तथाप्यद्यापि महासभामण्डपं स्वच्छन्दतो मलमूत्रादिना दूषयन्तो निर्विचाराः प्रतिनिधयो न किल न विद्यन्ते । न च सर्वे स्वयंसेवकाः शोधयितुं सदा सज्जस्थिता भविष्यन्ति ॥

महासभा तत्तादृशामेध्यमध्ये ततोऽप्यधिकदिनानि प्रचलेद्यदि व्याधिप्रसरणं निष्प्रतिबन्धं स्यादिति अहमलक्षयम् ॥

## चतुर्दशोऽध्यायः

# लेखको भृत्यश्च

महासभादिनद्वयात्परं मेलनीयाभवत् । तत्कार्यालये मद्रीयसेवा यदि स्वीक्रियेत तदा तत्र कार्यमनुतिष्ठतानुभवः संपादनीय इति निरचैषम् ॥

तस्मात्कलकत्तानगरप्राप्तिदिवसमेव स्नानादिकं निर्वर्त्य महासभायाः कार्यालयमगच्छम् । श्री. भूपेन्द्रनाथ-वसु-महाशयः श्री. घोषाल-महाशयश्च कार्यदर्शिनावभूताम् । आर्यभूपेन्द्रमुपेत्य मम सेवाभिलाषुकत्वमवेदयम् । स च मामभिवीक्ष्याकथयत्—मन्निकटे भवतानुष्ठेयं न किंचित्कार्यमस्ति । किं तु घोषालमहाशयः किमपि ते प्रयच्छेत् । तत्पार्श्वं याहीति ॥

श्रीघोषालमहाशयस्य पार्श्वमहमगच्छम् । स मामाशिरोऽङ्गुष्ठं बद्धदृष्टिरवलोक्यापृच्छत् । तवाहं परं लेखकोद्योगं प्रयच्छेयम् । अपि त्वमेनं कुर्या इति ॥

अहं प्रत्यवोचम्—अवश्यमेव करिष्ये । मदीयशक्तिमनतिक्रान्तमुद्योगं सर्वमपि चिकीर्षुः संनिधिमागतोऽस्मीति ॥

सैव खलु साध्वी भावनेति घोषालमहाशयोऽकथयत् । परितः स्थितान् स्वयंसेवकानभिवीक्ष्याब्रवीत्—ननु श्रुतमनेन युवकेनोक्तमिति । तदनु मामवोचत्— यदि तावन्निरूप्यतामत्र भूयांसि पत्राणि पतितस्थितानि । तानि सर्वाणि परीक्षेथाः । पश्य तत्रैवासंदी वर्तते । तामालभ्य कार्यमुपक्रमस्व । इह मत्पार्श्वमागच्छतः परःशताञ्जनान्ननु पश्यति भवान् । अहं किं कुर्वीय । किमहमेतानाभाषयेयमुताहो पत्रपुंजेषु मां निमज्जयतामेषां निरुद्योगिनां जनानामुत्तराणि लिखेयम् । कार्यमेतद्विधातुं मन्निकटे नैकोऽपि लेखको वर्तते । एषु पत्रेषु भूयिष्ठानि नैव मुख्यानि भवन्ति । तथापि त्वं सर्वाणि परीक्षस्व । यस्य यस्य पत्रस्य प्राप्तिः सा लेखतो निवेदयितव्येति मन्यसे तस्य तस्योत्तरं प्रेष्यताम् । यत्र पर्यालोच्य प्रतिवचनं देयं तन्मे विदितं कुर्विति । एतद्विश्वासेन ममानिर्वचनीयः प्रमोदः समजनि ॥

अस्मिन्कर्मणि मां नियुञ्जानस्य श्रीघोषालमहाशयस्य मत्परिचयो नासीत् । मन्नामप्रत्यभिज्ञादिकं तेन पश्चादबोधि ॥

मम कार्यं तल्लेखराशिपरीक्षणं मम सुकरमलक्ष्यत । प्रथमराशिरचिरेणैव समापितः । श्रीघोषालः सुतरामतुष्यत् । कथालापप्रसंगो हि तस्य स्वाभाविकः । अविच्छिन्नकथालापेनैव पंचषा होरास्तेन याप्यन्ते स्म । मत्सकाशान्मदीयचरित्रविस्तारमुपलभ्य स्वनियोगेन लेखकोद्योगे व्यापारितं च मां चिन्तयमानो मनागलज्जत । परमस्मिन्विषये तमेनमहं निश्चिन्तमकार्षम् । तथाहि मयोक्तम्—

अलं विचार्य । क्व यूयं क्व वाहम् । महासभासेवयैव वार्धक्यमाप्ता भवन्तः । अतो मे गुरुसमानाः । अयमस्मि परमनुभवशून्यः कनीयान् । अस्मिन् कर्मणि मां नियुञ्जानैर्भवद्भिर्बहूपकृतं मे । मम हि महासभाकार्यचिकीर्षा वर्तते । तत्कार्यकलापं विस्तरेणावगन्तुमपूर्वोऽवकाशः किल भवद्भिरदायीति ॥

श्रीघोषालमहाशयोऽचकथत्—

यत्सत्यमियमेव साध्वी वृत्तिः । आधुनिका युवकास्तु नैवं गृह्णते । आ तज्जन्मप्रभृति महासभामहं जाने । किं बहुना । अस्याः प्रतिष्ठापनप्रसङ्गे श्रीह्यूममहोदयेन मम सहभागित्वं विद्यत इति ॥ इत्थमावयोरुभयोरपि मैत्री समवर्धत । मध्याह्ने कमप्यभ्यवहारं सहैव करिष्यावह इति मामुपारुधत् ॥

श्रीघोषालमहाशयस्य भृत्यो निजस्वामिन आंतरकंचुकस्य बन्धनं घटयति स्म । तद्दृष्ट्वा तस्य कार्यमहमेवाकरवम् । ममेदमिष्टमासीत् । मम हि सर्वदा ज्येष्ठेष्वादरो महानभूत् । विज्ञातमदीयहृदयोऽयमात्मनोऽल्पसेवां कर्तुमवकाशं मे प्रयच्छति स्म । कंचुकस्य बन्धनं

घटयन्तं मां सास्मितमवादीत्–ननु प्रेक्ष्यताम् । महासभाकार्यदर्शी स्वकंचुके बन्धनं घटयितुमप्यवकाशं न लभते । सर्वदा यत्र क्वापि कर्मणि व्यापृतो भवतीति ॥

तस्यार्जवमनुध्यायतो मम यद्यपि हासोऽजायत तथापि तत्सेवायामीप्रदप्यनादरो मम नोदपादि । एतत्सेवया कलितो लाभः परममूल्यो भवति ॥

कियद्भिरेव दिवसैर्मम महासभायाः कार्यचालनस्य मर्म हृद्गतमासीत् । भूयिष्ठानां नेतॄणामहं दर्शनमकरवम् । गोखले–सुरेन्द्रनाथ-प्रभृतीनां योधानां प्रवृत्तीरदर्शम् । कालं वृथाक्षिप्यमानमपश्यम् । अस्मदीयकार्येष्वाङ्ग्लभाषायाः प्रामुख्यतामालोकयम् । एतेन परं विषण्णोऽभवम् । शक्तिर्वृथाक्षिप्यते स्म । एकेन निर्वर्त्यं कर्म बहवोऽन्वतिष्ठन् । बहूनि महत्त्वपूर्णानि कार्याणि न कस्यापि कार्याण्यासन् ॥

मदीयमानसं यद्यपि दोषानिमान् सूक्ष्मतया न्यरूपयत् तथापि प्रकामोदारमासीत् । तस्मादहमात्मानमित्थमबोधयं यद्यथाकार्यं प्रचलति स्म ततोऽपि साधीयसा मार्गेण तच्चालयितुमशक्यं स्यादिति । इत्थमनुसंधानवशात्कार्यस्य कस्यापि न्यक्कृतिभावनाया नावकाशोऽभवत् ॥

## पंचदशोऽध्यायः

# महासभायाम्

अथ महासभामिलत् । रमणीयतया सज्जीकृतं महामण्डपं विभवोत्तरमाबद्धव्यूहं स्वयंसेवकगणं वेदिकामध्यासीनाङ्ज्येष्ठपुरुषांश्च निशामयन्नाश्चर्यचकितोऽभवम् । अस्मिन्महति समाजे काहमिति विस्मयोऽजायत ॥

सभाध्यक्षस्य भाषणं तावदेकं पुस्तकमेवासीत् । तत्कालमस्यामूलान्तं वाचयितुमशक्यत्वादितः किञ्चित् ततः किंचिदुपादाय सभायां तदपाठि ॥

तदनु विषयनिर्धारिणीसमितेः सदस्यानां वरणं समवर्तत । गोखलेमहाशयो मां समितिकूटाननयत् ॥

सरफिरोजशामहाशयेन तावन्मदीयं प्रस्तावमङ्गीकर्तुं प्रतिपन्नमासीत् । किन्तु तेन स प्रस्तावो विषयसमितेः पुरो नेतव्यः कदा–इति चिन्तयन्नहमुपविष्टोऽभवम् । प्रतिप्रस्तावं दीर्घभाषणं चलति स्म । तच्च पुनराङ्ग्लेयभाषया । प्रतिनिर्णयमुपष्टंभको यः कोऽपि प्रख्यातनायकः पश्चादवतिष्ठते स्म । एतादृशभेरीनिर्घोषमध्ये मम शिञ्जनं कः शृणुयात् । यथा यथा निशामुखं प्रत्यासदत् तथा तथा मे हृदयं वेगेन धडधडायितुं प्रावृतत् । यथाहमिदानीं स्मरामि

तथा प्रस्तावा चरमगृहीता विद्युद्वेगेन व्यद्राव्यन्त । सर्वोऽपि ततो निर्गन्तुमुद्यतो भवति स्म । अथ रात्रावेकादशाहोरावादनवेला समुपस्थिता । अहं वक्तुमधीरः स्थितः । प्रागेव मया दृष्टेन गोखले-महाशयेन प्रस्तावो मदीयः पठित आसीत् । अहं तस्य पीठमुपसृप्य शनैरवोचम् । ,यथा कथापि भवद्भिरहमुपकर्तव्योऽस्मीति । स मामाह स्म । तव प्रस्तावो मया न विस्मृतः । इहत्यः संभ्रमो ननु प्रत्यक्ष एव । तथापि प्रस्तावमेनं विस्मर्तुं नाहमवकाशं दास्य इति ॥

अथ सरफिरोजशामहाशयोऽब्रवीत्—अद्यतनः कार्यकलापः समाप्तिमागतः खलु । तदनु गोखलेमहाशयः प्रोच्चैरघोषयत्—ननु दक्षिणाफ्रिकाप्रस्तावोऽद्यापि तिष्ठति । आर्यो गान्धिः कियता कालेन समीक्षमाणः स्थित इति ॥

अपि प्रस्तावोऽयं भवता दृष्ट इति सरफिरोजशामहाशयोऽपृच्छत् ॥

अथ किम् ॥

तमत्रभवान् कच्चित्संगतं मन्यते ।

संगतमस्ति ॥

यदि तावद्वाच्यतामिदानीं गान्धे ।

अहं कम्पमानस्तमवाचयम् ॥

अथ सर्वैरुदघुष्टं सर्वसंमत्या स्वीकृतोऽयमिति ।

वाच्छामहाशयो मामवादीत्—गांधे इतःपरं सभायां भाषितुं तव निमिषपञ्चकमवकाशो विद्यत इति ॥

कार्यक्रमोऽयं न मां पर्यतोषयत् । प्रस्तावमर्थतो ग्रहीतुं न केनापि प्रायासि । सर्वोऽपि निर्गमनाय त्वरते स्म । गोखलेमहाशयेन प्रस्तावो दृष्ट इति हेतोरन्यैस्तस्य पठनमवबोधश्च नावश्यक इति बतामन्यत ॥

अथ निशा प्रभाता । तद्दिने मया भाषितव्यमधिकृत्याहमचिन्तयम् । पञ्चभिर्निमिषैः किं भाषितव्यम् । सम्यग्गृहीतविषयस्यापि यथोचितशब्दानां न स्फूर्तिरासीत् । भाषणं विलिख्य न पठितव्यं किन्तु तत्रैव स्थित्वा भाषितव्यमिति पूर्वमेव निश्चयोऽकारि :। परंत्वसक्तमुपन्यासितुं दक्षिणाफ्रिकादेशे यथा यः कृतोऽभ्यासः सोऽत्र विलुप्तिं गत इवालक्ष्यत ॥

उपनते मदीयप्रस्तावसमये वाच्छामहाशयो मन्नामधेयमघुषत् । अहमुत्थाय स्थितः । मम शिरो घूर्णति स्म । कथं कथमपि प्रस्तावमवोचयम् । तत्र कश्चित् स्वप्रणीतं पद्यप्रबन्धमेकं मुद्रापयित्वा प्रतिरूपकाणि प्रतिनिधिभ्यः संव्यभाजयत् । स च विदेशयानसमुद्रलंघन-प्रस्तावको ग्रन्थः । अहमेकं पद्यं वाचयित्वा दक्षिणाफ्रिकादेशेऽस्मदीयजनानां क्लेशजातमुद्दिश्य द्वित्रवचनान्यब्रवम् । तत्कालमेव वाच्छामहाशयो घण्टामवादयत् । भाषमाणस्य ममाद्यापि पञ्च-निमिषा न व्यतीता इत्यहं दृढमवदम् । शिष्टेऽपि निमिषद्वये प्रागेव मम प्रबोधनाय घण्टा

वादितेति न मे विदितमासीत् । अन्येषु होरार्धकालं पादोनहोराकालं च भाषमाणेष्वपि घण्टा न वाद्यते स्मेति मया प्रत्यक्षीकृतमासीत् । तस्मादहं विषण्णो घण्टावादनोत्तरक्षणमेवोपविष्टोऽभवम् । तथापि मदीया बालबुद्धिस्तत्पद्यमेव सरफिरोजशामहाशयस्य प्रत्युत्तरमासीदित्यमन्यत । महासभया प्रस्तावस्य स्वीकृतिप्रकारं प्रति किमु वक्तव्यम् । तदाले प्रतिनिधीनां प्रेक्षकाणां च भेदबाहुल्यं नादृश्यत । सर्वेऽपि हस्तमुदयच्छन्त । सर्वेऽपि प्रस्तावा ऐकमत्येन स्वीचक्रिरे । मदीयप्रस्तावस्यापि गतिरभिन्नैवासीत् । तस्मान्मदीयदृष्ट्या प्रस्तावस्य महत्त्वं सर्वमप्यस्तमितमेव । तथापि महासभया स्वीकृत इत्येतावदेव ममानन्दमुत्पादयितुं पर्याप्नोत् । महासभायाः संमतिर्नाम निखिलभारतवर्षस्य स्वीकारचिह्नमित्येषा भावना कस्य वा प्रमोदं न जनयेत् ॥

## षोडशोऽध्यायः

# लॉर्डकर्झनराजास्थानम्

**महासभामेलनं** तावदवसितमासीत् । किन्तु दक्षिणाफ्रिकादेशार्थे मया व्यापारमण्डली ( चेम्बर आफ़् कामर्स ) प्रभृतयः संस्था द्रष्टव्या अभूवन् । इदमुद्दिश्य कलकत्तानगरेऽहमेकमासमतिष्ठम् । अस्मिन्नवसरेऽहमतिथिमन्दिरे स्थितिमगृह्णनावश्यकं परिचयं प्राप्य 'इंडिया क्लब' इत्यत्र कोष्ठमेकं यत्नतः समपादयम् । अस्याः संस्थायाः सदस्येषु केचन प्रमुखा भारतीया आसन् । तत्परिचयं संपाद्य दक्षिणाफ्रिकादेशस्य कार्यमुद्दिश्य तेषु किंचित्कुतूहलमुत्पादयितुमाशा मनस्यासीत् । एतत् 'क्लब्-मन्दिरं' गोखलेमहाशयो 'बिलियर्ड' क्रीडार्थमायच्छति स्म । कलकत्तानगरे मया कियन्तं कालं स्थीयत इति ज्ञात्वा स्वमन्दिर एव वस्तुं मामामन्त्रयत् । तदामन्त्रणमहं कृतज्ञतापूर्वकमङ्गीकृतवान् । किं तु स्वयमेव तत्र गमनं मे नारोचत । स च मामेकाहं वा दिनद्वयं वा प्रतीक्ष्य स्वयमेवागत्य गृहमनैषीत् । मदीयसंकोचप्रकृतिमवबुध्य सोऽभ्यधात् । तथा आर्या गांधिमहाशयाः भवद्भिरस्मिन्नेत्र देशे किल स्थातव्यम् । तस्मादेवंविधः संकोचो न युज्यते । यावद्भिः शक्यं तावद्भिर्जनैः सह संबन्धो भवद्भिर्घटनीयः । महासभायाः कार्यं भवद्भिः करणीयमित्यस्ति ममाभिलाष इति ॥

गोखलेमहाशयेन सह ममावस्थितिं प्रकृत्य वृत्तान्तो यावन्न वर्ण्यते तावन्मम 'इंडिया क्लब' मन्दिरे संवृत्तः कश्चिदनुभवो निगद्यते ॥

प्रायोऽस्मिन्नेव समये चक्रवर्तिप्रतिनिधिना लॉर्डकर्झनमहोदयेन कल्पिता राजसभा प्राचलत् । तदर्थमाहूताः कतिपये राजानो महाराजाश्चैतत् 'क्लब् मन्दिरं' अध्यवसन् । तत्र-

स्थितैरेतैः सुन्दरं वंगदेशीयमन्तर्नेपथ्यकवचप्रावारकं धार्यमाणं मया प्रत्यक्षीक्रियते स्म। राजसभोपस्थानदिवसे भरण्यभुज इवाप्रपदीनायुष्णीषान् विराजमानचार्मणपादूश्च तेऽधारयन्त। इदमालोकमानस्य मम विषादोऽजायत। तेषामेकमहमपृच्छम्—कुतोऽयं वेषपरिवर्तनमिति॥

स च प्रत्यवादीत्—यथास्मदीयदुःखमस्मद्दैवमेव। स्वविभवबिरुदसंरक्षणाय कियन्तो वापमानाः सोढव्या इत्यन्ये कथं जानीयु इति॥

"परमेतानि भुजिष्यधार्याणि शिरोवेष्टनानि तद्योग्याः पादुकाविशेषाश्च कुतो धार्या ते।"

भुजिष्याणामस्माकं च वैलक्षण्यमस्तीति किं भवन्तो मन्यन्ते। यथामी गृहे नः किंकरास्तथा वयं च लॉर्डकर्झनस्वामिनः किंकराः स्मः। यद्यहमेतस्यां सभायां न संनिधास्ये तदा तत्फलं मयानुभवितव्यं स्यात्। सामान्यवेषधारी यद्यहमुपतिष्ठेयं तथापि दोषत्वेन गण्यते। अथ चैवात्मानं संनह्य तत्रोपसृतवतः कर्झनप्रभुणा सहालपितुमवकाशो लभ्यत इति किं भवन्तो मन्यन्ते। लेशतोऽपि न हीति॥

ऋजुहृदयमित्रस्य दशां दृष्ट्वा मम कारुण्यमुदपद्यत॥

एतदुपोद्घातादीदृशस्यैवान्यस्य राजास्थानस्य स्मृतिरायाति॥

लॉर्डहार्डिंगमहोदयेन यदा काशी-हिन्दु-विश्वविद्यालयस्य प्रतिष्ठा कृता तत्कालं तदास्थानमचलत्। तदानीमपि राजमहाराजकदंबकं मिलितमासीत्। मयापि तत्र संनिधातव्यमिति भारतभूषणश्रीमालवीयमहाशयैः सोपरोधमामंत्रितः सन्नहमप्यगच्छम्॥

परं वनिताजनयोग्यवेषधारिणो महाराजांश्च वीक्ष्य विषादमगमम्। अहो कौशेयाप्रपदीनं कौशेयदीर्घकवचः उरसि वज्रमौक्तिकहाराः बाह्वोरंगदबन्धा उष्णीषोपरि वज्रमौक्तिकस्तबकाः। एतैः सह सौवर्णकोशनिविष्टाः खड्गलताः कटिबंधतोऽप्यालम्बन्त॥

एतानि न तेषां राज्याधिकारस्य चिह्नानि परं तदीयदासत्वस्य बहलाङ्छनानीत्यहमवेदिषम्। तेऽमी निजनैर्बल्यचिह्नानि एतानि स्वच्छन्दतः पर्यगृह्णन्तेति ममासीन्मनीषा। परंतु पश्चादवगतं मया यदेवंविधेषु संमेलनेषु राजभी रत्नभरणान्येतानि अवश्यमेव प्रतिमोक्तव्यानीति नियमो विद्यत इति। अन्यच्च मया विज्ञातं यदेवं भूषणैरात्मनः परिष्कारः केषांचिन्नितान्तमसह्यमासीत् तैश्चाभरणान्येतादृशेष्वेव संदर्भेष्वधार्यन्त न पुनरन्यदेति॥

एतद्वचनं कियत्सत्यतामालंबत इत्यहं न जाने। परन्तु तैरेतदाभरणजातमन्यदा धार्यतां न धार्यतां वा तथापि सार्वभौमप्रतिनिधेरास्थाने महिलाजनयोग्यैर्भूषणैरात्मानमलंकृत्य तैः संनिधातव्यमिति नियमो न किं नितान्तविषादकरः॥

अहो धनसंपत्तिप्रभुत्वमहत्त्वाभिमानैर्मनुष्यः पापानर्थरूपं कियच्छुल्कं प्रदाप्येत॥

सप्तदशोऽध्यायः

# गोखलेमहाशयेन सहैकमासः (१)

गोखलेमहाशयः स्वगृहे मदागमनप्रथमदिनात्प्रभृति यथा मम पारक्या बुद्धिर्न संभवेत्तथा संव्यधात्। कनीयसि भ्रातरीव मय्यवर्तत। मदपेक्ष्यमखिलं ज्ञात्वा तदनुकूलसंविधानान्यकारयत्। भाग्यवशान्मदपेक्ष्यमत्यल्पमेवासीत्। स्वकार्याणि स्वयमेव कर्तुमभ्यस्ततया ममान्यसेवासापेक्षता प्रायो नासीत्। मदीया स्वावलंबनता मदीयमङ्गशौचं वस्त्रशौचं च मदीय उद्यमो नियमाचरणं चैतत्सर्वं तस्य मनागाहत। एतदवलोक्य मम विस्मयं जनयन् परं मामश्लाघत ॥

सर्वमात्मगतं मयि विस्रंभेण प्राकाशयत्। स्वसंनिधिमागतानां प्रमुखपुरुषाणां परिचयं मामकारयत्। तेषां जनानामिदानीं डाक्टर (अद्य 'सर' बिरुदधारी) प्रफुल्लचन्द्र-रॉयमहाशयः सुस्पष्टं मे स्मृतिमायाति। स हि गोखलेभवनस्य समीप एव कृतनिवासः सर्वदा तत्रागच्छति स्म। तस्य परिचयं मामेवं बोधयन्नकारयत्—

"इमे खलु प्रतिमासमष्टशतरूप्यकाणामर्जितारोऽपि स्वकीयव्ययार्थं परं चत्वारिंशद्रूप्यकान्निक्षिप्य शेषमखिलं सार्वजनिककार्येषु विनियुञ्जानाः प्रोफेसररॉयमहाभागाः। अनूढा इमे। न च विवाहयितुमिच्छन्तीति ॥"

अभ्याद्यतनरॉयमहाशयस्य तदानींतनाध्यापकरॉयमहाशयस्यापि न कोऽपि भेदो दृश्यते। पूर्वं यथा साधारणं नेपथ्यमपोषयत् सांप्रतमपि तथैव सामान्योऽस्य वेषः। परमिदानींतनं 'खादीवास' इति विशेषः। पूर्वमेभिः खादीवसनं न धार्यते स्म परं स्वदेशशिल्पालयोत्पन्नं वासः। गोखले-डाक्टर-रॉय-महाशयोः कथालापेन नाहमतृप्यम्। स हि कथालापो देशसंबन्धिनां वा विषयाणां चर्चाज्ञानमधिकृत्य वा जिज्ञासा समासीत्। कांश्चिद्विषयानाकर्णयतो मम दुःखं च जायते स्म। ते हि विषया नेतॄणां दोषोद्घाटनरूपा अभूवन्। यानहं महायोद्धृनगणयं तेऽमी क्षुल्लका इति मे बुद्धिरुदेतुमारभत ॥

गोखलेमहाशयस्य कार्यानुष्ठानरीतिर्यथा प्रमोदकरी तथा शिक्षाप्रणयिनी च। असौ नैकमपि क्षणं वृथाक्षपयत। तस्य कथालापस्य संबन्धाः सर्वेऽपि देशकार्यार्थमेव। तद्वाक्यमसत्यस्य छायामपि कार्पण्यस्य चिह्नमपि नाविरकरोत्। हिन्दुस्थानस्य पारतन्त्र्यं दारिद्र्यमित्यादिकमेव सर्वदा तस्य चिन्ताहेतुरासीत्। कार्यान्तरेषु तं प्रवर्तयितुं बहवो जनास्तमुपसर्पन्ति स्म। ते सर्वेऽप्येकमेवोत्तरमलभन्त। तद्यथा—

"एतत्कार्यं युष्माभिरेव क्रियताम्। मत्कार्यमनुष्ठातुं मां मुञ्चत। देशस्य स्वातन्त्र्यसंपादनं तावन्मयापेक्षितम्। तस्मिन् प्राप्ते कार्यान्तरं मे बोधयत। अद्य पुनरेतत् कार्यैकव्यग्रस्य मम क्षणमात्रमवकाशो वा एकश्वासशक्तिर्वा नावशिष्यत इति ॥"

रानडेमहाशये तस्य गौरवं तु वाचि वाचि प्रत्यक्षीभवति स्म । तथाहि । रानडेमहाशयाः प्राहुरिति वाक्यं तस्य वेदोक्तिरासीत् । तदेतत्परमप्रमाणतया तेनोपन्यस्यते स्म । तत्र स्थिते मयि रानडेमहाशयस्य जयन्ती ( पुण्यतिथिर्वा न सम्यक् स्मरामि । ) समागता । अयमुत्सवो गोखलेमहाशयेन नियमेन निरवर्त्यत । तस्मिन्नवसरे तदीयसुहृदौ प्रोफेसर-काथवटे-महाशयोऽन्यः कश्चन प्राड्विवाकश्च ( सबजज ) जयन्त्युत्सवार्थमामन्त्रितौ संन्यधिषाताम् । तदानीं रानडे-महाशयमधिकृत्य निजस्मृतिपथवर्तिनः कांश्चिद्वृत्तान्तान् गोखलेमहाशयोऽवर्णयत् । रानडे-तेलंग-मंडलिक' इति त्रयाणां पुरुषाणां परस्परं तारतम्यमदर्शयत् । तेलंगमहाशयस्य मनोहरां भाषण-शैलीमश्लाघत । मांडलिकं सुधारकदृष्ट्या प्राशंसत । व्यवहारिजनं प्रति तस्य कर्तव्यपालनं दृष्टान्तयितुमेकां लघ्वीं कथामकथयत् । तथाहि । तद्दिनस्य धूमशकटी तदागमनात्पूर्वमेव प्रचलिता । ततो यां स्वकार्यिकस्य व्यवहारमुद्दिश्य काले न्यायसभां जिगमिषुः पृथग्धूमश-कटीमेकां भाटयित्वा प्रस्थित इति । अथ रानडेमहाशयस्य सर्वतोमुखीनां शक्तिमुपवर्ण्य यथासौ महापुरुषस्तत्कालीनसर्वनायकानप्यत्यशेतेति प्रादर्शयत् । रानडेमहाशयो न केवलं परमनिष्णातः प्राड्विवाकोऽभूदपि तु प्रगल्भतमोऽयमितिहासकृदर्थशास्त्रवेत्ता सुधारकश्चासीत् । असौ राजकीयाधिकारी भवन्नपि धीरस्वभावः प्रेक्षको भूत्वा महासभामागच्छति स्म । तदभिज्ञतां प्रति सर्वोऽपि तथा व्यश्वसीद्यथास्य निर्णयः समस्तैरपि निर्विवादमङ्गीक्रियते स्म । एवं स्वगुरोः समवायिनीं बुद्धिशक्तिं हार्दिकगुणसंपत्तिं च वर्णयतो गोखलेमहाशयस्यानन्दो नात्मनि प्राभवत् ॥

तत्कालं गोखलेमहाशयस्तुरंगरथमेकमस्थापयत् । तद्रक्षणमस्य कथमावश्यकं संवृत्त-मिति न मे विदितमासीत् । अस्मिन्विषये मदीयमसंतोषं तस्मै न्यवेदयम् । स मयाप्रच्छि । विद्युद्यानेन ( ट्राम ) भवद्भिः कुतो न गन्तव्यं एवं कृते नायकानां गौरवं किं परिहीयेतेति ॥

इदं श्रुत्वा स मनाग्विषण्णः प्रत्यवादीत्—

भवानपि मे हृदयमवगन्तुं किं न शक्नोति । न्यायविधायकमंडलात्प्राप्तं यद्धनं तत्स्वार्थे न व्ययियिष्यामि । विद्युद्यानेन गच्छतो युष्मानवलोकमानस्य ममासूया जायते । किन्तु स्वयमपि तथा कर्तुं न शक्नोमि । अहमिव भवानपि यदि सार्वजनिककार्येषु तीव्रकुतूहली स्यात् तदा भवतोऽपि विद्युद्यानेन प्रयाणं न संभाव्येत । पर्यन्ते कष्टमप्यनुभवितव्यम् । नायकैर्यद्यत्क्रियते तत्सर्वं तत्सुखार्थमेवेति भावना निराधारा । भवदीयमार्जवं मन्मनः प्रीणयति । यावच्छक्यमहमपि सरलतां पालयामि । परमस्मादृशानां बहवो व्यया अनिवार्या भवन्तीति । एवं मदसमाधानका-रणमेकं स न्यवर्तयत् । परमन्यत्तथापनेतुं नाशकत् ॥

अथाहमपृच्छम्—

"ननु विहारार्थमपि भवन्तो न गच्छन्ति । एवं स्थिते भवतामस्वास्थ्यप्राप्तौ किमाश्चर्यम् देशकार्यव्यग्राणां भवतां व्यायामार्थमप्यवकाशः किं दुर्लभ इति ॥"

विहाराय लब्धक्षणोऽहं किं भवता कदापि दृष्ट इत्युत्तरमागतम् ॥

गोखलेमहाशयं प्रति ममादरो गौरवं च तथाभूते यथास्य प्रत्युत्तरं मया न दीयते स्म। उपरिनिर्दिष्टेन तस्य वाक्येन यद्यपि न मे मनः समाधीयत तथाप्यहं तूष्णीमभवम्। कार्य-बाहुल्ये सत्यपि यथा वयं भोक्तुमवकाशं लप्स्यामहे तथैव व्यायन्तुम्यमप्यवकाशोऽस्माभिरवशेषणीय इत्यहममंसि। अधुनापि तथा मन्ये। एतेन हि कार्यशक्तिरभिवर्धते। न पुनरपक्षीयत इति ममाशयः ॥

## अष्टादशोऽध्यायः

# गोखलेमहाशयेन सहैकमासः (२)

गोखलेगृहमधिवसता मया सर्वोऽपि कालो गृहान्तरेव न यापितः। प्रतिज्ञातपूर्वं हि मया दक्षिणाफ्रिकानिवासिभ्यः क्रैस्तमतेभ्यो यदहं हिन्दुस्थानवर्तिभिः क्रिस्तमतावलंबिभिर्मिलितः संस्तदीयस्थितिगतीः परिचेष्यामीति। श्रुतपूर्वं च मया बाबुकालीचरणबॅनरजीमहोदयस्य नाम। स मे परं गौरवास्पदमासीत्। स किल महासभायां मुख्यपात्रं वहति स्म। सामान्यतो हिन्दुस्थानवर्तिनः क्रैस्तमतीया महासभामप्रविशन्तो हिन्दुमुसलमानजनान् दूरीकुर्वन्ति स्म। तस्मादमीषु यथा मे भयसंशयास्तथा श्रीकालीचरणमहाशयेनासीत्। तमेनं द्रष्टुमिच्छामीति गोखलेमहाशयमवेदयम्। स चाकथयत्—'तदुपसर्पणेन किमिव हि प्रयोजनम्'। नूनमसौ साधुजनः। तथापि त्वामयं न परितोषयेदिति मन्ये। तमहं सम्यग्जाने। असौ सर्वथा द्रष्टव्य एव चेदवश्यं दृश्यतामिति ॥

बॅनरजीमहाशयस्य दर्शनार्थे विज्ञाप्तिर्मया प्रेषिता। सद्य एव तेनापि तत्प्रतिपन्नम्। तत्पार्श्वमुपगते मयि तद्भार्या मुमूर्षुश्शयितेत्यवेदिषम्। तस्य मन्दिरं निराडम्बरमासीत्। महास-भायां यः कवचाप्रपदीनधारी दृष्टस्तमेवाद्य गृहे बङ्गीयवसनाङ्गीकाधरं साक्षात्कृत्य प्रमुदितोऽभवम्। यद्यपि तदानीमहं पारसीकवचाप्रपदीनधारी तथापि तदीयं सरलजीवनं मे नितान्तमरोचत। कमप्युपोद्घातमन्तरेणैव मम क्लेशानवर्णयम्। स मामपृच्छत्—दुरितभारभृत एव वयं जन्म गृह्णीम इति भवद्भिः किं श्रद्धीयते। अहं श्रद्दध इत्यवोचम्। अथ सोऽब्रवीत्। एवं तर्हि तस्यास्य मूलपापस्य निवृत्तिर्हिन्दुधर्मे न दृश्यते। क्रैस्तधर्मे तु तन्निवृत्तिमार्गो दर्शितः। पापस्य प्रायश्चित्तं मरणम्। तथाहि बाइबलवचनम्—क्रिस्तप्रपत्तिरेकैव मुक्तेर्मार्ग इति ॥

श्रीभगवद्गीतासु प्रतिपादितं भक्तिमार्गमहं न्यरूपयम् । परमिदं निष्प्रयोजनमासीत् । तस्य सौजन्याय तमहमवन्दिषि । यद्यपि सर्वात्मनाहं न परितुष्टस्तथापि तद्दर्शनान्मम लाभ एवासीत् ॥

आमासान्तमहं कलकत्तानगरे वीथ्यां वीथ्यामचारिषम् । संचारो भूयसा पादचारेणैव निरवर्त्यत । एतत्कालमेव जस्टिसमित्रमहाशयस्य सरगुरुदासबॅनरजीमहाशयस्य च दर्शनं मयाकारि । दक्षिणाफ्रिकादेशकार्यस्य कृते तयोः साहायकं ममावश्यकमासीत् । अस्मिन्नेव समये सरप्यारीमोहनमुकरजीमहाशयं चाहमदर्शम् ॥

कालीचरणबॅनरजीमहाशयः कालिकादेवालयमधिकृत्य पुरा कथालापमकार्षीत् । तद्देवालयदिदृक्षा मम तीव्राभवत् । तद्विषयको वृत्तान्तः पुस्तकेषु मया पठितपूर्व आसीत् । तस्मादहमेकदा तत्रागमम् । न्यायमूर्तिमित्रमहाशयस्य मन्दिरं तस्यामेव वीथिकायामवर्तत । अतोऽहं तद्दर्शनदिवस एव कालिकादेवालयमुपागच्छम् । कालिकाया उपहारीकर्तुं वृन्दशो नीयमानानवीनवालोकयम् । देवस्थानवीथ्यां वनीपकव्यूहः पङ्क्तिं वध्वा व्यतिष्ठत । तत्र धार्मिकभिक्षुका विरागिजनप्रभृतयोऽप्यविद्यन्त । तदा हृष्टपुष्टानां याचकानां भिक्षाप्रदानं सर्वथा दोष एवेति तदानीमप्यहममंसि । एषामेकः संघातो मामन्वागच्छत् । तन्मध्यादेकः प्रधानभिक्षुस्तत्रोपविष्टो दृष्टः । अये वत्स क्व गन्तासीति स मामपृच्छत् । अहमुत्तरमदाम् । सहचरद्वितीयं मामसावुपविश्यतामित्यगादीत् । वयं तथैवाकुर्महि ॥

अस्याविकवृंदस्योपहारीकरणं किं धर्म्यं मन्यन्ते भवन्तः इत्यहमप्राक्षम् । प्राणिनां हिंसनं धर्म इति को वा मन्यत इति । स प्रत्यवोचत् ।

" यदि तावदधर्मोऽयमिति कस्माद्भवद्भिर्लोका न बोध्यन्ते ।

" तदेतदस्मत्कार्यं न भवति । भगवद्भजनं खलु नः कार्यम् । "

" भगवद्भजनाय स्थानमन्यत्किं न विद्यते । "

" अस्माकं सर्वेऽपि प्रदेशाः समानाः । लोकास्तावदविवृन्दसदृशाः यत्र महद्भिः कृष्यन्ते तत्र ते प्रसर्पन्ति । न खलु तत्कार्यमस्माकं साधूनाम् ॥

अस्याश्चर्चाया विरम्य देवस्थानमव्रजाम । अस्मत्पुरस्ताच्छोणितनिर्झरः प्रवहति स्म । नाहं तत्र स्थातुमशकम् । क्षुभ्यमानचेतसो मम चित्तभ्रांतिरजनि । तद्दर्शनमिदं नाद्यापि विस्मृतम् ॥

सायं तस्मिन्नेवदिने कतिपयवंगमित्रैः सह भोजनायाहं निमन्त्रितः । तत्राहमेकेन सख्या नृशंसमिदं पूजाविधानमधिकृत्यालापिपम् । स चाचकथत् । तत्र किल भेर्यः प्रहण्यन्ते । दंध्वन्यमानेषु तेषु न हि वेदनामवयः/संविदत इति ॥

एतत्प्रतिवचनं न मे गलस्याधस्तादवातरत् । यद्यावयो भाषितुमशक्ष्यंस्तदा तत्कथा ह्यन्यैवा भविष्यदित्यहं मित्रमवोचम् । नृशंसोऽयमाचारः प्रतिरोद्धव्य इत्यहममंसि । भगवतः बुद्धदेवस्य पुरातनी कथा मम स्मृतिमागात् । किन्तु कार्यमेतन्मदीयशक्तिमतिक्रान्तमित्यहमवेदिषम् ॥

पुरा किल यथाहममंसि तथैव संप्रत्यपि मन्ये । न खलु मनुष्यप्राणापेक्षया अवेः प्राणा निकृष्टा भवितुमर्हन्ति । नरदेहस्य कृतेऽवेः प्राणहिंसनं नाहमनुमोदे । एते प्राणिनो मानुषक्रौर्यस्य विषयीकृता यथा शरणविधुरा भवन्ति तथा मनुष्येण सनाथीकृतास्ते सर्वदा रक्षणीया इति ममाभिप्रायः । किन्तु तादृशसेवायोग्यताविहीनः पुरुषः स्वाश्रयमप्येतादृशं तेषां प्रदातुमनर्हः । अवीनामिदं निकुरंबं पापपरिप्लुतादस्माद्वलिविधानाद्रक्षितुं मत्तः समधिका त्यागसंपत्तिरात्मशुद्धिश्चावशक्यौ भवतः । अबलेऽहमेतयोरात्मशुद्धित्यागयोः कृते परं चाक्रंदमानो मुमूर्षुरिवास्मि स्थितः । मानवकोटिमस्मान्महापातकात्समुद्धृत्य निर्दोषिणो जनान्परिपाल्य देवालयान्पवित्रीकुर्वन्महाकारुण्यशाली तेजस्वी कश्चनपुरुषधौरेयः काचन साध्वीमणिर्वावतरत्विति निरन्तरमहं प्रार्थये । प्राज्ञा बुद्धिकुशला प्रेममयी बंगमाता कथमिदं सहेत ॥

## एकोनविंशोऽध्यायः

# गोखलेमहाशयेन सहैकमासः ( ३ )

**धर्मोपदेशेन** काल्यै प्रदीयमानं घोरबलिं निशाम्य वंगानां जीवनरीतिमवगन्तुमाकांक्षा ममोदपद्यत । ब्रह्मसमाजवृत्तान्तः प्रागेव मया बहुशः पठितः श्रुतपूर्वश्च । प्रतापचंद्रमजुमदारस्य जीवनचरितं भूयसाहमवेदम् । श्रुतपूर्वाश्च केचित्तदीया उपन्यासाः । तेन प्रणीतं केशवचन्द्रसेनस्य जीवनकथापुस्तकं संपाद्य महतोत्साहेन तत्पठित्वा साधारणब्रह्मसमाजस्यादिब्रह्मसमाजस्य च भेदमग्रहीषम् । पंडितशिवनाथशास्त्रिणोऽहमदर्शम् । अध्यापककाथवटेद्वितीयोऽहं महर्षिदेवेन्द्रनाथ-ठाकूरमहाशयस्य दर्शनार्थमगमम् । तदानीं तं द्रष्टुमवकाशो न दीयते स्म । अतस्तद्दर्शनमशक्यमासीत् । तथापि तत्र प्रचलति ब्रह्मसमाजोत्सवे आवामामंत्रितावभूवे । तत्र नौ मनोहरवंगसंगीतश्रवणसौभाग्यमुपानमत् । तदाप्रभृत्यहं वंगसंगीतप्रियोऽस्मि ॥

प्रायः परिशीलितब्रह्मसमाजवृत्तस्य मम श्रीविवेकानन्दस्वामिनां दर्शनमकृत्वा तूष्णीमवस्थानं न शक्यमासीत् । तस्मादहं महतोत्साहेन वेलूरमठं प्रत्यशेषमध्वानं वा तदध्वनो भूयिष्ठभागं वा नेदानीं स्मर्यते — पादचारेणागच्छम् । जनसामान्यक्षुण्णमार्गाद्दवीयसि प्रदेशे संनिविष्टोऽयं

मठो मदीयमानसमप्रीणयत् । स्वामिनामस्वस्थतया तद्दर्शनस्य दुर्लभत्वं तत्कालमेषां स्वकीये कलकत्तामन्दिरे चावस्थानमाकर्ण्य मम दुःखमाशाभङ्गश्च जायेताम् ॥

तदनु श्रीमत्याः भगिनीनिवेदिताया मन्दिरमन्विष्य तां चोरंघीवीथ्यां क्वचिद्दिव्यभवने साक्षादकरवम् ॥ समन्तात्तदीयवैभवमालोक्य मम विस्मयोऽभूत् । आवयोः कथालापेषूभय-सामान्यो भागः ,स्वल्प एवासीत् । कृतैतत्प्रस्तावं गोखलेमहाशयो मामवादीत् यदस्याश्चंचल-प्रकृतेस्तव च सामान्यत्वाभावो नाम न मे विस्मयावह इति ॥

तामहं पुनः श्रीपेस्तनजी-पादशाहस्य भवनेऽपश्यम् । यावत् सा पादशाहस्य वर्षी-यस्या ,जनन्या सहालपितुमुद्यता तावदहं तत्रोपस्थितः । ततोऽहमनयोर्द्विभाषित्वमशिश्रियम् । यद्यपि तदभिप्राया मम नानुमोदनीया आसंस्तथापि तां हिन्दुधर्मे प्रेमवृष्टिमापातयन्तीमवशः सन्नस्तौषम् ॥

प्रतिदिनमहं दक्षिणाफ्रिकादेशव्यतिकरमुद्दिश्य कलकत्तानगरस्य प्रमुखान् दर्शं दर्शं तत्रत्या धार्मिकसार्वजनिकसंस्थाः परीक्ष्य तद्वृत्तांतान् ज्ञायं ज्ञायं कालमत्यवाहयम् । एकदा डा. मालिकमहाशयस्याध्यक्षतायामहं हिन्दुस्थानीयशुश्रूषादलेन बोअरयुद्धे कृतां सेवामधिकृत्य व्याख्यानमेकमदाम् । अस्मिन्नवसरेऽपि मम 'इंग्लिशमॅन' पत्रिकया सह भूतपूर्वः परिचयः साहाय्यमकरोत् । सॉण्डर्समहाशयश्च रुग्णशयितोऽपि षण्णवत्युत्तराष्टशताधिकैकसहस्रतमे वत्सरे तेन यावत्साहाय्यमकारि तावत्साहाय्यमद्याप्यकरोत् । गोखलेमहाशयस्तमेनं मदीयमुपन्यासम-श्लाघत । डा. रायमहाशयेन च स्तूयमानमाकर्ण्य नितान्तममोदत ॥

इत्थं गोखलेभवनवासो मम कलकत्तानगरे निर्वर्तनीयं कार्यं नितरां सुगममकार्षीत् । वंगप्रमुखानां कुलैः परिचयसंपादनायावकाशमदात् । वंगदेशेन सह मदीयनिकटसंबंधप्ररोहस्य बीजमवाप्सीत् ॥

स्मरणीयस्यास्य मासस्य बह्वयः स्मृतयोऽत्र परित्यक्तव्याः । अथाहमिदानीं त्वरयालोर्मम ब्रह्मदेशगमनं तत्र फुंगीसंज्ञकानां भिक्षूणां दर्शनं चोपवर्णयिष्यामि । तेषामलसत्वमालोकयन्नहमदूये । तत्र मया सुवर्णदेवालयो दृष्टः । तत्र प्रज्वलतः संख्यातिगान्दीपान्विलोक्य न मे संतोषः समजनि । गर्भागारे चंक्रम्यमाणान्मूषकान्विलोकमानस्य मोरवीक्षेत्रे दयानन्दस्वामिनामनुभवो मे स्मृतिमागतः । ब्राह्मदेशे स्त्रीणां स्वातंत्र्यता चटुलता च मां मुग्धमकुरुताम् । जनानामल-सभावं पश्यतो मे खेदः समजनि । अल्पकालमपि तत्रावतस्थुषा मयेदं प्रत्यक्षीकृतं यद्यथा हिन्दुस्थानं मोहमयी ( मुंबई ) नगरं नानुकरोति तथा ब्राह्मदेशोऽपि रंगूननगरीमिति । यथा च हिन्दुस्थाने वयमांग्लेयवणिग्भिर्मध्यस्थाः कृतास्तथा ब्राह्मदेशे साङ्ग्लैरस्माभिर्ब्राह्मीया मध्यस्थाः कृता इति ॥

ब्रह्मदेशात्प्रतिनिवृत्तोऽहं गोखलेमहाशयस्यानुज्ञां प्राप्य ततो निरगच्छम्। तेन वियोगो दुःसहोऽभूत्। तथापि बंगेषु (अथवा कलकत्तानगरे) मदीयकार्यस्यावसितत्वात्तत्र पुनरवस्थानं निर्हेतुकमासीत् ॥

क्वचिदेकत्र स्थितिबन्धात् पूर्वं हिन्दुस्थानस्य लोहपथसंचारिणीषु धूमशकटीषु तृतीयश्रेण्यां प्रयाणमङ्गीकृत्य तच्छ्रेणीगतानां पथिकानां क्लेशा अवगन्तव्या इत्यालोचयम्। तथा च गोखलेमहाशये तत्प्रस्तावमकरवम्। स तावन्मामुपाहसत्। अथ मदीयमुद्देश्यं मया सविस्तरमुपवर्णितमवगत्य सप्रमोदमन्वमोदत। अहमादौ काशीं गत्वा तत्र रुग्णशयितां श्रीमतीं वेसन्टमहाशयां दृष्ट्वा कृतप्रणामः परापतिष्यामीति निरचैषि ॥

तृतीयश्रेण्यां प्रयियासुना मया प्रत्यग्रमेव परिकरः सज्जीकरणीय आसीत्। गोखलेमहाशयो मोदकपूरिकाभिः संभृतामेकां लौहीं फलाहारमंजूषां मह्यमदात्। अहं द्वादशाणकमूल्यमितं वालकंकोशमेकमक्रैषम्। छायोर्णमयी( छायेति पोरबंदरसंस्थानगतमौर्णवासोभिः प्रसिद्धं स्थलम् )मेकामायतांगिकामकारयम्। एकांगिका, एकमुत्तरीयं, एकं चतुष्कांबरं, एक आन्तरकवच इत्येभिर्वस्तुभिः कोशः संभरणीय आसीत्। एका जलस्थाली, प्रावरणाय कंबलमेकं, मन्निकट एवास्तांम्। एवं परिकरं सज्जीकृत्य प्रस्थानोन्मुखोऽभवम्। गोखलेमहाशयो डॉ. रॉयमहाशयश्च मामाप्रष्टुमयोध्वनिकेतनमागमताम्। आगमपरिश्रमो भवद्भिर्न वोढव्य इत्यावेदितावपि तौ साभिनिवेशमागतावेव। किं च गोखलेमहाशयः प्राह स्म। भवद्भिः प्रथमश्रेण्यां यदि प्रयाणमकरिष्यत तदा नैवाहमत्रागमिष्यामीति ॥

निकेतनं प्रविशन्तं तं गोखलेमहाशयं न कोऽपि न्यरुधत्। स किल तदानीं कौशेयोष्णीषं कवचमुत्तरीयं चापोषयत्। डॉ. रॉयमहाशयस्तु बंगीयनेपथ्यधारी स्थितः। तमेनं प्रयाणानुज्ञापकपत्रपरीक्षकोऽधिकारी न्यरुधत्। किं त्वयं मे मित्रमिति गोखलेमहाशयेन बोधितस्तं निरमुचत् ॥

विंशोऽध्यायः

## काश्याम्

**एतत्प्रयाणं** कलकत्तानगराद्राजकोटं यावद्द्राघणीयमासीत्। आग्रा-काशी-जयपुर-पालनपुर-इत्येतेषु स्थाय स्थायं राजकोटं जिगमिषुरासम्। इतोऽपि भूयांसि स्थलानि वीक्षितुं मम नावकाशोऽविद्यत। एतेषु स्थलेष्वेकैकं दिनमहमतिष्ठम्। ऋते पालनपुरादन्यत्र सामान्ययात्रिक-

वदहं धर्मशालायामर्चकगृहेषु वावातरम् । यथाहमिदानीं स्मरामि तथा मम प्रयाणव्ययो धूमशकटीव्ययं मिलित्वा एकत्रिंशद्रूप्यकेभ्योऽधिको नासीत् ॥

तृतीयश्रेण्यां प्रयानप्यहं प्रायेण पत्रवाहिनीः ( मेइल ) शकटीं वर्जयित्वा सामान्यशकट्या प्रायासिषम् । विदितं हि मया यत्पत्रवाहकधूमशकटी परं जनसंकुला भवतीति । किं चास्याः भाटकाधिक्यं चान्यः प्रतिबन्धः ॥

तृतीयश्रेणीशकट्यामशुचित्वं मलागारेषु कच्चरत्वं च यथापुरमेव तिष्ठति । प्रायशोऽधुना मनाग्विशेषो दृश्येत । परन्तु तृतीयश्रेणीपथिकानां प्रथमश्रेणीपथिकानां च कृते यद्यत्सौकर्यं परिकल्पितं तदन्तरं तत्तच्छ्रेणीपथिकैः प्रदेयभाटकान्तरापेक्षयात्यधिकं भवति । तृतीयश्रेणी-पथिकाः पशुवद्गण्यन्ते । तदर्थमुपकल्पितानि सौकर्याणि च पशुमात्रयोग्यानि । युरोपखंडे प्रयाणमहं सर्वदा तृतीयश्रेण्यामेवाकरवम् । अनुभवेप्सया सकृदेव प्रथमश्रेण्यां प्रायासिषम् । किन्तु प्रथमतृतीयश्रेण्योर्नाहमेतादृशमन्तरमलक्षयम् । आफ्रिकादेशे तृतीयश्रेणीपथिकस्तोमो 'निग्रो'जन-भूयिष्ठो भवति । तथापि तत्र तृतीयश्रेणीशकटीषु जनानामानुकूल्यमसंबाधाश्रयश्च परं लभ्येते । तत्र क्वचित्प्रदेशेषु तृतीयश्रेणीपथिकानां शयनार्थमपि व्यवस्था दृश्यते । आसनानि सोपबर्हाणि भवन्ति । प्रतिशकटं नियतसंख्याधिकानां जनानां प्रवेशो नियमतो निरुध्यते । अस्मिन्देशे पुनः तत्संख्यानियमातिक्रम एव प्रायिको दृश्यते ॥

तृतीयश्रेणीप्रयाणिकानामानुकूल्योपकल्पनविषये लोहाध्वसंचालकानामौदासीन्यं पथि-कानां श्वपचाचारस्तेषामन्येष्वश्रद्धा चेति सर्वाणीमानि संभूय शौचसंपन्नजनानां तृतीयश्रेणीप्रयाणं नाम प्रायश्चित्तरूपो दण्ड इव प्रतिभाति । अभितो वर्तिनां सुखदुःखे लेशतोऽप्यविगणय्य शकटे कच्चरकाष्ठप्रक्षेपः देशकालावनादृत्य स्वैरमेव धूमवर्तिसेवनं तमाखुताम्बूलादिकं चर्वयित्वा सर्वतः शकटे निष्ठीवनं क्रोशनं चाक्रंदनं दुरुक्तिभाषणमित्यादीनि सामान्यतः पथिकानां दुर-भ्यासा भवन्ति । द्व्यधिकनवशतोत्तरसहस्रतमे वत्सरे मम यादृशोऽनुभवस्ततश्च पंचशतोत्तर-नवशताधिकसहस्रतमात्प्रभृत्येकोनविंशत्युत्तरनवशताधिकसहस्रतमपर्यन्तमविच्छिन्नं मया कृता-त्तृतीयश्रेणीप्रयाणाद्यादृशोऽनुभवस्तयोरन्योन्यमन्तरम् किमपि मया न दृष्टम् ॥

मन्ये दुःसहपरिस्थितेरीदृशाया भैषज्यमेकमेवास्तीति । तथाहि । सुशिक्षितैर्जनैस्तृतीय-श्रेण्यामेव प्रयाणमङ्गीकर्तव्यम् । दुष्टाः प्रयाणिकानां पद्धतयः समीकर्तव्याः । सति संभवे लोहमार्गाधिकारिणो बोधं बोधं बद्धहस्तैर्यथा तैर्न स्थीयते तथा संविधातव्यम् । स्वानुकूल्य-संपादनार्थमुत्कोचप्रदानेन केनापि प्रवर्तितव्यम् । किं च शासनातिक्रमात् सर्वोऽपि वारणीयः । एतेन सुमहती व्यवस्था भविष्यतीत्यहं स्वानुभवादाचक्षीय ॥

अष्टादशोत्तरनवशताधिकसहस्रतमोत्तरमेकवत्सरान्तराले मया रुग्णपतितत्वात्तदाप्रभृति तृतीयवर्गे प्रयाणं हातव्यमापतितम् । एतेन मम सर्वदा व्रीडा विषादश्च जायेते । तत्रापि

संयोगवशात् यावत्तृतीयश्रेणीप्रयाणिकानां क्लेशदूरीकरणार्थं मया क्रियमाणः प्रयत्नः सम्यक् चलितुमारब्धस्तावन्मयैव तृतीयश्रेणीप्रयाणं त्यक्तव्यमापतितम् । धूमशकटीषु बाष्पयानेषु च प्रयातॄणां दीनपथिकानां यानि कष्टानि यानि चैषामनानुकूल्यानि ये च भूयोऽनर्थप्रदास्तेषां दुरभ्यासाः यानि च राज्याधिकृतैरन्यायतो विदेशीयवणिजामुपकल्पितानि सौकर्याणि तानीमान्यस्मदीयाद्यतन-सार्वजनिकजीवने महाप्रश्नरूपमापन्नानि भवन्ति । अस्मिन्नर्थे द्वित्राः प्राज्ञा उत्साहिनः सत्पुरुषा यद्यपि स्वेषां सर्वमपि कालं विनियुञ्जिरंस्तदा नैतद्बहु स्यात् ॥

अथेदानीं तृतीयश्रेणीपथिकानां प्रस्तावं विरमय्य काश्यां मे संवृत्तमनुभवं वर्णयिष्यामि । अहं महति प्रत्यूषे काशीं प्राप्तः । पण्डस्य कस्यचिद्गृहे वसतिर्ग्रहीतव्येति मया व्यचिन्ति । धूम-शकटादवतीर्णमात्रं मां बहवो ब्राह्मणाः पर्यवारयन् । तेभ्यामेकमितरापेक्षया समधिकशौचसंपन्नं साधीयांसं च मत्वा तस्य मन्दिरमगच्छम् । मया कृतं तद्वरणं संगतमेवासीत् । गृहाङ्गणे गौरेका बद्धस्थिता सौधोपर्येकस्मिन्कोष्ठे स मां वसतिमग्राहयत् । यथाविधि गंगास्नानं यावत्करिष्यामि तावन्निराहारः स्थास्यामीत्यहं निरचेषि । एतदर्थं पण्डमिश्रेण सर्वं सज्जितमभूत् । स किल मया प्रागेव बोधितोऽभूत् यत्सपादरूप्यकादधिकां दक्षिणां नैव प्रदातुमहं शक्नुयामतस्तदनुरूपमेव सर्वं सज्जीकरणीयमिति ॥

पण्डमिश्रस्तामेतां मदीयविज्ञप्तिं निर्विवादमेवांगीकृतवान् । अकथयच्च — यात्रिकास्ताव-दाढ्या वा दीना वा भवन्तु । अस्माभिः कार्यमाणं तु पूजाविधानमुभयोः समानमेवेति । मन्ये पण्डमिश्रेण मद्विषये पूजादिकं नैव संकोचितमिति । अथवा द्वादशघंटावादनवेलायां समाप्तपूजः काशीविश्वनाथदेवालयं दर्शनार्थमगमम् । तत्र प्रत्यक्षीकृतं विमृशतो मम महद्दुःखमभूत् । एकोत्तरनवत्यधिकाष्टशतोत्तरसहस्रतमे वत्सरे मोहमयीनगरे यदाहं न्यायवादिवृत्तिमुपजीव्य स्थितः तदा काशीयात्रामधिकृत्य प्रार्थनासमाजमन्दिरे प्रवृत्तमेकमुपन्यासं श्रोतुमगमम् । एतेन किंचिदिवाशाभङ्गमनुभवितुं सज्जस्थितेऽपि मया तस्मिन्दिने मम संवृत्त आशाभङ्गो वितर्कपद-वीमत्यक्रमीत् ॥

देवस्थानमतिसंकटपिच्छिलेन संधिमार्गेण गन्तव्यमासीत् । तत्र शान्तेर्नामापि नाभूत् । दंशमशकानां सैन्यं यात्रिकैरापतितैश्च क्रियमाणश्च कलकलश्च दुःसहेऽभूताम् ॥

यत्र मनुष्यो ध्यानमीश्वरप्रणिधानं च कर्तुमिच्छति तत्र तत्कर्तुमशक्यमासीत् । दिध्यासोर्जनस्य स्वीयोऽन्तरात्मैवान्वेष्टव्योऽभवत् । अभितः समुज्जृम्भमाणं कलकलमचेतयमाना भगिन्यस्तत्र नूनमदृश्यन्त । किन्तु तत्कीर्तिं देवालयस्य व्यवस्थापकान्नोपातिष्ठत । काशीविश्व-नाथदेवालयस्य परिसरे यथा निर्मलं मधुरं शान्तिमयं च ( बाह्यमांतरिकं च ) वातावरणं रक्ष्येत तथा व्यवस्थापकैः संविधातव्यम् । प्रत्युताकुशला व्यापारिणो गुडपिष्टं नवनवानि क्रीडनकानि च विक्रीणानाः प्रत्यक्षीकृताः ॥

देवालयोपकंठमुपसर्पन् द्वाराग्रे पोपूयमानस्थितं दुर्गन्धिकुसुमानां राशिमवालोकयम्। अंतरेका सुन्दरामृतशिला स्तीर्णाभवत्। किन्तु सा केनापि कलागन्धशून्येनांधश्रद्धोपेतेन भक्तेन रूप्यकाकारैश्चित्रैः प्रत्युप्तासीत्। तानि रूप्यकचित्राणि मलस्य परमाश्रयभूतान्यासन्॥

अथाहं ज्ञानवापीपार्श्वमगच्छम्। अत्र मया भगवतोऽन्वेषणमकारि। स पुनर्न लब्धः। अनेन मदन्तरात्मा ज्वलति स्म। ज्ञानवापीमभितः कच्चरमपश्यम्। दक्षिणाप्रदानं सर्वथा मे नारोचत। तस्मादहमेकां काकिणीं तत्र न्यक्षिपम्। तत्रत्य पण्डमिश्रस्य क्रोधो नात्मनि प्राभवत्। पादानकमुद्धृत्य स तं व्यपाक्षिपत्। अथ मामाक्रुश्य त्वया मे कृतोऽयमपमानस्त्वा-मंजसा नरकनिपातं प्रापयतीत्यभ्यधात्॥

अहं शान्त एव स्थितः। तदनु मयाभ्यधायि 'स्वामिन् मम यद्भाव्यं तद्भविष्यत्येव। किंतु भवादृशानां मुखादीदृग्वाचो विसर्गे न हि शोभते। सति संतोषे गृह्यतामियं काकिणी। नो चेत्तामपि भवन्तो हापयिष्यन्तीति॥

स चाकथयत्–अपेहि रे अपेहि। न कार्यं भवतः काकिण्या इति। तदन्वसौ ममोपर्याक्रोशवचनानि पर्जन्यवर्षमपातयत्॥

अथाहं तां काकिणीमादाय तदनङ्गीकारेण पण्डमिश्रस्य संवृत्तां हानिं मम संवृत्तं लाभं च गणयन् यथागतं प्रास्थिषि। परन्तु पण्डमिश्रो नाष्टिको भवितुं नारोचयत्। स मां पुनराहूय प्राह स्म। भवतु। काकिणीमत्र निक्षिप्य याहि। तव शीलमनुकर्तुं नाहमिच्छामि। मयास्याः काकिण्या अपरिग्रहे तवैवारिष्टं भवितेति॥

तूष्णीमहं तस्मै काकिणीं प्रदाय दीर्घं निश्वासमुत्सृज्य तस्मादपासरम्॥

तदनु द्विवारं काशीमहं गतोऽस्मि। परन्त्वेतन्मम महात्मताख्याति प्राप्तेरनन्तरम्। तत्तादृशस्य कथं वा ममेदृशोऽनुभवः सुप्रापः स्यात्। मद्दर्शनार्थमागच्छन्तो जनाः कथं मे भगवद्दर्शनस्यावकाशं दद्युः। महात्मनो दुःखानि महात्मनो नाम मादृशस्यैव वेद्यानि। इमं विशेषमन्तरेण तत्र कच्चरावकरादिकं यथापूर्वमेवासीत्॥

परमेश्वरस्यापारकरुणां प्रति ये केचित्संशयालवः सन्ति त ईदृशानि तीर्थक्षेत्राणि गत्वा प्रेक्षन्ताम्। अयं महायोगी स्वनामापदेशेन प्रचलन्ति कियन्ति कपटानि कियतो डंभाचारान् कियतश्चाधर्मान्त्सहेत। अथाप्ययमुदासीनः पश्चादवतिष्ठते। तथाहि–गीतायां तदुक्तिः–

ये यथा मां प्रपद्यन्ते।
तांस्तथैव भजाम्यहम्॥ इति॥

[ये मां यथा रीत्या प्राप्तुं यतन्ते तेषामहं तथैव रीत्या स्वागतं दास्यामि।]

यद्बीजमुप्तं तद्बीजसदृशं फलमश्नुते॥

कर्मणः फलमन्यथा कर्तुं को हि शक्नुयात् । तस्मादत्र भगवतः प्रवेशेन किं कार्यम् । अत एवायं लोकयात्रानियमान् विधाय स्वयमपसृत्य तूष्णीमुदास्त इति ॥

एवं दृष्टदेवालयोऽहं वेसंटमहाभागां द्रष्टुमगमम् । सा किल तत्कालमेवोल्लाघतां प्राप्य स्थिता । मन्नामांकितं पत्रखण्डमन्तः प्राहिणवम् । तत्क्षणमेव सा समुपागात् । तद्दर्शनमात्रं मया लिप्सितमासीत् । तस्मादहमवोचम्—अस्वस्था भवतीत्यहं जाने परं श्रीमत्या दर्शनं चिकीर्षुरागतोऽस्मि । अस्वस्थयापि भवत्या यदात्मा मम दर्शनपथं नीतः तदहं कृतज्ञोऽस्मि । नाहमितोऽधिकं श्रीमतीमुपरोद्धुमिच्छामीति । एवमुक्त्वा तत्सकाशादहमपासरम् ॥

## एकविंशोऽध्यायः

# मोहमयीनगरे स्थितिग्रहणम्

**आसीत्किल** प्रबलोऽभिलाषः श्रीमतो गोखलेमहाशयस्य यन्मया मोहमयीनगर्यामेव स्थितिमता न्यायवादिवृत्त्युपजीविना सार्वजनिकसेवायामात्मनः सहकारिणा भाव्यमिति । तदानीं सार्वजनिकसेवा नाम महासभायाः सेवैवासीत् । तेन प्रतिष्ठापितायाः संस्थायास्तदेव मुख्यं कार्यं यदस्या महासभाया कार्यस्य प्रचालनं नाम ॥

गोखलेमहाशयस्य सूचनामहमरोचयम् । परंतु न्यायवादिवृत्तिः सूपजीव्या भविष्यतीति मम नासीद्विश्वासः । पूर्वानुभूतमद्यापि न किल विस्मृतमासीत् । किं चात्मश्लाघनया कार्यिकाणामाकर्षणं नाम विषवज्जुगुप्स्यं मम प्रत्यभासीत् ॥

तदहमादौ राजकोट एव कार्यमुपक्रमणीयमिति निश्चयमकार्षम् । तत्र मम हितैषी विदेशं प्रति मम गमनहेतुभूतः केवलराममावजीदवेमहाशयः स्थितः । स मह्यं त्रीन् व्यवहारान्समपादयत् । तेषां द्वौ काठियावाडदेशस्य 'जुडिशियल असिस्टंट' इत्यधिकारिणो न्यायसभायामवेक्षणीयौ प्रतिविमर्शौ (अपील) रूपावास्ताम् । तृतीयस्तु जामनगरे प्रवर्तमान एको मूलव्यवहारः । एषां प्रचालनेऽहं शक्तः स्यां न वेति संशयाकुलं मां केवलरामदवेमहाशयोऽवादीत्—अलं पराजयशङ्कया । यावच्छक्यं भवद्भिः प्रयत्यताम् । अहमिह स्थितोऽस्मि खलु भवतां साहाय्यकर्तेति ॥

अस्मिन्व्यवहारे दिवंगतसमर्थमहाशयो मम प्रतिपक्षवादी स्थितः । मयापि भूयसा प्रयत्नेन सम्यक् सज्जीभूय स्थितम् । न खलु हिन्दुस्थानस्य शासननियमानामहं परमाभिज्ञ आसम् । परंतु केवलरामदवेमहाशयेन व्यवहारस्यास्य विस्तरमखिलं बोधितोऽभवम् । श्रुतं हि मित्रमुखान्मया दक्षिणाफ्रिकादेशं प्रति गमनात्पूर्वं यत् सरफिरोजशा-महेता-महाशयेन

साक्ष्यसंबंधिशासनस्य नियमावलिः कंठे कृतासीत् । तदेतदमुं जयशीलमकरोदिति । इदं मनसिकृत्य समुद्रयानेऽहं 'इंडियन एविडेन्स अेक्ट' पुस्तकं सव्याख्यानं सम्यगपठिषम् । अपि च दक्षिणाफ्रिकादेशे न्यायवादिवृत्तिवशात्संपादितोऽनुभवश्च ममासीत् ॥

जितो मया व्यवहारः । एतेन मम कियानप्यात्मविस्रम्भः समजनि । प्रतिविमर्शव्यवहारद्वयं प्रत्यादितः प्रभृत्यहं निश्चिन्त एवासम् । तदपि मया जितम् । सर्वमेतद्विभावयतो मम मोहमयीन-गर्यां स्थितिग्रहणेनापि चिन्ताया न कोऽपि स्यादवकाश इत्याशा समुदेति स्म ॥

किन्तु मोहमयीनगरं प्रति गन्तव्यनिश्चयो यथा मयाङ्गीकृतः इत्यस्य वर्णनात्पूर्वमांग्लाधिकारिणमविचारमज्ञानं चाधिकृत्य मदीयमनुभवं वर्णयिष्ये । जुडिशियल 'ॲसिस्टंट' इति व्यवहारद्रष्टाधिकारी कदापि नैकत्रातिष्ठत् । किन्तु सर्वदा संचरमाण एव स्थितः । यत्र यत्र तेन वसतिरग्राहि तत्र तत्र न्यायवादिनः कार्यिकाश्च तमन्वसरन् । न्यायवादिनः परस्थलगमन-प्रसंगे स्वकीयस्थले गृह्यमाणादभ्याधिकं पारितोषिकद्रव्यमजिघृक्षन्त । एतेन कार्यिकाणां द्विगुणो व्ययः समापतत् । क्लेशोऽयं प्राड्विवाकप्रभोर्हृदयं नैवास्पृशत् ॥

प्रसक्त एष व्यवहारो वेरावल-ग्रामे द्रष्टव्योऽभवत् । तत्कालं तत्र ग्रन्थिज्वरो भयंकरः प्रसरति स्म । पंचशतोत्तरपंचसहस्रप्रजासंख्याके तस्मिन् ग्रामे प्रतिदिनं पंचाशज्जना व्याधिना स्पृश्यन्तेति ज्ञप्तिरस्ति । ग्रामः—सर्वोऽपि शून्यप्राय आसीत् । ग्रामस्याहमदूरवर्तिन्यामेकस्यां निर्जनायां धर्मशालायां वसतिमग्रहीषम् । व्यवहारिजनैस्तु कुत्र वस्तव्यम् । ते पुनरनाढ्याश्चेत्तेषां परमात्मैव गतिः ॥

वेरावले ग्रन्थिज्वरप्रसारात्तत्स्थलं परित्यज्य क्वापि स्थलान्तरे व्यवहारदर्शनाय प्राड्विवाकः प्रार्थयितव्य इति मदीयः कश्चनसुहृत् स्वयं व्यवहारवान् मां प्रति तंत्रीसंदेशं प्राहिणोत् । मम प्रार्थनापत्रमवलोक्य प्राड्विवाको मामप्राक्षीत्—किं भवान् भीरुक इति ॥

मया प्रत्यवाचि—अहं भीरुको वा न वेति न खलु प्रकृतः प्रश्नः । अहं तावद्यथाकथा वा निर्वहेयम् । परन्तु व्यवहारिणामेषां का गतिरिति ॥

प्राड्विवाकः प्राह—ग्रन्थिज्वरोऽयं भारतवर्षं निजमंदिरीकृत्य विजृम्भते किमर्थमिदानीं ततो भेतव्यम् । इह निरूप्यतां यादृशो वायुगुण इति यथा च स्पृहणीयो भवतीति (अयं प्राड्विवाकः ग्रामाद्विप्रकृष्टे समुद्रतीरोपरिष्टे राजमंदिरप्रख्ये वस्त्रशिबिरे गृहीतवसतिरासीत्)। एवं हि जनाः ग्रामबाह्ये निराकुलप्रदेशे निवस्तुं शिक्षयितव्या इति ॥

अस्य वेदान्तस्य किमुत्तरं मया दातव्यम् । प्राड्विवाकः स्वकीयं नियोज्यप्रधानमाकार्य तमवादीत्—गांधिमहाशयैरुक्तं मनसि निधाय न्यायवादिनः कार्यिका वा यदि क्लेशबाहुल्यमस्तु-युस्तदाहमत्र बोधनीय इति ॥

प्राड्विवाकस्तावन्निर्वचनया स्वबुद्ध्या यन्न्यायतया गृहीतं तदकरोत्। परं वस्तुतो दीनभारतवर्ष-क्लेशास्तस्य कथं वा वेद्याः स्युः। दीनजनानामस्माकमावश्यकताभ्यासो विचित्रतापद्धतयश्चेत्या-दिकं कथं स जानीयात्। सर्वदा सुवर्णमुद्राभिर्व्यवहरन्मनुष्यः कथमेकपदे ताम्रकाकिणीभिर्गणनां कर्तुमुत्सहेत। यथा हस्ती पिपीलिकां नानुचिन्तयेत्तथा हस्तिवन्महोन्नतसौकर्यगृध्नुराङ्ग्लेयस्तथा पिपीलिकेवात्यल्पमिच्छुं भारतीयं नानुचिन्तयति न च तद्विषयकाणि शासनानि कर्तुं प्रभवति ॥

इदं तावदास्ताम्। अथास्मदीयकथां प्रति निवर्त्स्यामः। उपरि निरूपितरीत्या प्राप्तज-येनापि मया दिनकतिपयान् राजकोट एव स्थातव्यमिति व्यचिन्ति। अत्रान्तर एकस्मिन्दिने केवलरामो मत्पार्श्वमुपेत्यावोचत्। गांधे भवन्तमिह मुधा स्थातुं नानुमंस्यामहे। भवता मोहमयीनगर्यामेव निवासः समाश्रयणीय इति ॥

अहं तमपृच्छम्—तत्र मां को वावेक्षते। मदीयव्ययः किं भवता प्रदीयत इति ॥

"अवश्यमेव भवतो व्ययमहं दास्यामि। कस्यापि व्यवहारस्य हेतोर्भवन्तमुत्तरवादिनां प्रवरमिहानेष्यामहे। व्यवहारपत्रिकादीना लेखनाय व्यवहारान् भवत्सकाशमेव प्रेषयिष्यामः। उत्तरवादिनामुच्चैरारोपणमधस्तादवतारणं च न्यायवादिष्वस्मास्वेवायतेते। जामनगरे वेरावले च भवता प्रदर्शितां योग्यतामवलोक्य भवद्विषये नाहमीषदपि चिन्ता वहामि। सार्वजनिककार्यं निर्वोढुमेव भवान् गृहीतजन्मा भवति। काठियावाडदेश एवात्मानं प्रयासयितुं भवन्तं नानुमन्यामहे। अथ ब्रवीतु भवान् कदा मोहमयीनगरमुपगन्तेति ॥

"नातालदेशाद् द्रव्यागमं प्रतीक्षमाणः स्थितोऽस्मि। तत्प्राप्तिसमनंतरमेवं प्रयास्यामि॥"

सप्ताहद्वयान्तरे तद् द्रव्यमागमत्। अहं मोहमयीनगरमगच्छम्। तत्र 'पेईन, गिल्बर्ट ॲण्ड सयानी' इत्येषां कार्यालये कोष्ठमेकं भाटकेनाग्रहीषम्। अथेदानीं मदीयजीवनं स्थिरीभूतमिव मे प्रत्यभात्॥

## द्वाविंशोऽध्यायः

# धर्मसंकटम्

मोहमयीनगरस्य दुर्गाख्यविभागे कल्पितकार्यालयोऽहं गिरगांवप्रदेशे क्वचिदेकं गृहमन्विष्य तत्र वसतिमग्रहीषम्। किन्तु भगवान् तत्र निवस्तुं मां नान्वगृह्णात्। गृहमागतस्य मम चत्वारि दिनानि यावन्न व्यतीतानि तावन्मे द्वितीयकुमारो मणिलाल उल्बणव्याधिना शयनपतितो-ऽभवत्। विषमशीतज्वरेणाक्रान्तस्य तस्य श्वासकोशौ दूषितावभूताम्। रात्रिवेलायां संनिपात-

वशात् विभ्रमोऽप्यजायत । स किल कतिपयवत्सरेभ्यः पूर्वं स्फोटकोपद्रवेन बलवदुपसृष्टः पश्चात्स्वास्थ्यमापन्नो बालः ॥

अथ भिषग्वरमानैषम् । सोऽवादीत्—इदानीमौषधेनास्य न किमपि प्रयोजनं भवति । संप्रत्ययं कुक्कुटशावकसारमण्डं चावश्यमेव प्राशयितव्यः । तदेतदुपकरिष्यतीति ॥

मणिलालस्तदानीं दशवर्षदेशीयः स्वस्येच्छां प्रति नायमनुयोगार्ह आसीत् । तद्रक्षकस्य ममोपर्येव तन्निर्णयभारोऽपतत् । भिषग्वरः परमसाधुः कश्चन पारसीदेशीयः । तमेनमपृच्छम्—भिषग्वर, इमे वयं शाकाहारिणः । अनयोर्वस्तुनोर्नैकतरमपि बालायास्मै प्रदेयं भवति । यः कश्चिदन्य आहारो भवता निर्दिश्यतामिति ॥

भिषगवोचत्—

इदानीं वः कुमारः प्राणसंशये वर्तते । सोदकं दुग्धं यद्यपि सेवनीयं तथापि तेनास्य प्रकामपुष्टिर्न जायते । बहुषु हिन्दुकुटुम्बेषु चिकित्सामहं करिष्यामीत्येतद्भवतां विदितमेव । ते जनां यत्किमप्यौषधं मया दत्तं स्वीकुर्वते । तस्माद्वरं मन्ये भवद्भिः पुत्रविषये हठोऽयमनास्थेय इति ॥

सत्यमाह भवान् । भिषजा सतेत्थमेव खलु भवता वक्तव्यम् । परं ममानुयोज्यता महती वर्तते । यद्ययं प्रवुद्धवया अभविष्यत्तदा तदिष्टानुसारेण प्रवृत्तिराश्रयणीया भविष्यत् । किंत्विदानीं मया स्वयमालोच्य निर्णेतव्यं भवति । मन्ये पुरुषस्य या धर्मश्रद्धा सा किलावसरेष्वीदृशेषु वस्तुतः परीक्ष्यते । मनुष्येण मांसाहारादिकं न भोक्तव्यमिति यः सिद्धांतः स तावत्संगतो वा न वा भवतु मया पुनः स्वधर्मस्याङ्गतया गृहीतः । प्राणत्राणकराणि साधनान्यपि परिच्छेद्यान्येव भवन्ति । प्राणसंशयेऽपि कियन्ति चित् कार्याणि परिवर्ज्यान्येव भवन्ति । एवं गते यथाहं जानामि तदा मदर्थं वा मदीयानां कृते वा मांसादिकस्य प्रयोगो न मे धर्म्यः प्रतिभाति । तस्माद्भवता शङ्क्यमानमपायमनुभवितुं मया सज्जेन भवितव्यम् । किन्तु भवत्सकाशे विज्ञप्तिमेकां करिष्ये । भवतोपदिष्टमौषधोपचारं कर्तुमशक्तोऽहं मया ज्ञातां जलचिकित्सां कर्तुमिच्छामि । किं तु बालस्यास्य नाडीहृदयश्वासकोशादीनि परीक्षितुं नाहं जाने । यदि भवानिह सकृत्सकृदागत्य तदीयशरीरस्थितिं परीक्ष्य मह्यमावेदयेत्तदा कृतज्ञो भविष्यामीति ॥

सज्जनोऽयं भिषङ्मदीयकष्टं सद्यो विज्ञाय मत्प्रार्थनानुरूपं मणिलालस्य परीक्षणाय गतागतं कर्तुमन्वमन्यत । निजाभिप्रायप्रकाशने तत्कालमनभिज्ञाय मणिलालाय भिषजा सह संवृत्तं कथालापमावेद्य तदीयमतमपृच्छम् । स चावोचत—जलचिकित्सा प्रारभ्यताम् । नाहमण्डं कुक्कुटपोतसारं च भक्षयिष्यामीति ॥

तत्पदार्थद्वये मया प्रदत्ते सति नैष तद्भक्षयेदेवेति यद्यपि मे विदितं तथापि प्रतिवचनं तस्य निशम्य हृष्टोऽभवम् ॥

क्युनीभिषग्वरस्योपचारक्रममहमवेदिषम्। तदनुसारेणोपचारो मया कृतपूर्वश्च। ज्ञानं च मया यद् रोगनिवर्तकसाधनेषूपवासश्च लाभकर इति। क्युनीमहाशयस्योपचारपद्धतिमनुसृत्य मणिलालं कटिस्नानं कारयितुमुपाक्रमे। निमिषत्रयादूर्ध्वमसौ स्नानभाण्डे न निवेश्यते स्म। त्रीणि दिनानि तस्मै नारंगफलरसं सोदकं प्रायच्छम्। एतदतिरिक्तो न कोऽप्याहारस्तस्मै प्रादायि॥

किन्तु ज्वरो न शान्तः। चतुरधिकशतांशपर्यन्तमौष्ण्यमारोहति स्म। रात्रिवेलायां संनिपातविभ्रमः प्रादुरभूत्। अहमुद्भ्रान्त इवाभवम्। लोकः किं मां प्रवदेत्। मदग्रजः किं ब्रूयात्। अन्यो भिषक् किमिति नानीयते। आयुर्वेदवैद्यानामानयनं किमशक्यम्। स्वोन्मादानां कृते निजापत्यानि बलीकर्तुं मातापित्रोः को वाधिकारः। एवंविधा विकल्पा मदीयं मनः प्राविशन्. किंत्वेतान्प्रतिरुध्य हृदयस्यान्तरादियं वाणी श्रूयते स्म। यथा हे जीव स्वयं तत्समानदशां गतेन त्वया यथात्मोपचयेत तथैनं बालकमप्युपचरिष्यतः तव भगवान्प्रसीदत्येव। यथा तव जल-चिकित्सायां विश्वासः तथा वैद्यस्यौषधे स नास्ति। वैद्यः प्राणरक्षणं न हि प्रतिजानीते। तेन हि प्रयत्नमात्रं क्रियते। जीवसूत्रं परमात्मनो हस्ते तिष्ठति। भगवति भारं निक्षिप्य तत्स्मरणपूर्वकं श्रद्धामास्थाय यथाशक्ति शुश्रूषा कुतः खलु न कर्तव्येति॥

एवमनेकविकल्पजालेन परस्परविरोधिना माममथ्यमानहृदयः सुतरामशान्तिमगमम्। अथ रात्रिरागता। अहं मणिलालस्य शय्यायां तस्य पार्श्व एव शयितोऽभवम्। आर्द्रवाससा तं वेष्टयितुं निश्चयमकरवम्। तदनु समुत्थाय निशारमेकमार्द्रीकृत्य जलं निष्पीड्य तेन मणिलालं कंठादङ्गुष्ठपर्यन्तमावेष्ट्य बहिः शिरोमात्रदृश्यमेनं कंबलद्वयेन प्रावारयम्। आर्द्रवासः खंडेन तस्य शीर्षमबन्धयम्। तस्य शरीरं चुल्लिकोपरिस्थकंदुरिव तप्यते स्म। सर्वं शुष्कमासीत्। अस्तमिता स्वेदप्रवृत्तिः॥

अहमतिश्रान्तोऽभवम्। मणिलालं तस्य मातुर्वशे विसृज्य होरार्धकालं विशिश्रमिषु-श्चौपाटीपार्श्वमभ्यगमम्। रात्रौ तदानीं प्रायो दशघंटावादनवेला। जनसंचारो विरल आसीत्। परं कुतो मे स्मृतिर्विचारसागरे संनिमग्नस्य। भगवन्मदीयमानरक्षणं त्वदायत्तमित्यात्मनात्मानमबोधयम्। मम मुखाद्रामनाम निरंतरं निःसरति स्म। कंचित्कालं कृतपरिक्रमो धडधडायमानहृदयः सदनमुपागमम्॥

गृहान्तःप्रविष्टमात्रमेव मणिलालोऽप्राक्षीत्। 'बापु' प्रत्यागतोऽसीति। आगतोऽस्मि वत्स। "अहमिदानीं ननु बहिरुद्धर्तव्यः। अहो दह्ये दह्ये।"

"वत्स मणिलाल, किमङ्ग स्विद्यसे।"

"अहो स्वेदस्नातोऽस्मि। ननु प्रावरणं झटित्यपनीयताम्॥"

अहं मणिलालं फालस्पर्शं न्यरूपयम्। तत्र सर्वतो मौक्तिकानीव स्वेदबिंदवः स्थिताः। ज्वरः प्रशाम्यति स्म। (ज्वरोऽवरोहति स्म)। दीर्घमहं निश्वस्य भगवते धन्यवादं समार्पयम्॥

मणिलाल इतः परं तव ज्वरः पलायत इत्यवेहि। इतोऽपि किंचित्प्रवृत्ते प्रस्वेदे तवाच्छादन-मपनेष्यामि। मैवं 'बापु' अद्यैव मां चुल्लिकोदरादुद्धरत। अन्यदा पुनः परीक्षामहे॥

एवं कथाप्रसंगेन कंचित्कालमयापयम्। यथास्थितस्यास्य ललाटपट्टात् स्वेदधारा प्रावहत्। निशारकमपनीय तस्याङ्गं प्रामार्जयम्। अथावां पितापुत्रौ एकशयनेऽस्वपिव॥

उभाभ्यामपि गाढनिद्रासुखमन्वभावि। प्रातर्मणिलालस्य ज्वरो भूयसा प्रशान्त इवासीत्। सोदकं दुग्धं फलरस इत्येताभ्यामेव चत्वारिंशद्दिनानि स वृत्तिमकरोत्। ततो मे भयं निःशेषमपासरत्। ज्वरःस्थायित्वेऽपि चिकित्सावशं प्रपन्नः॥

सांप्रतं मम पुत्रेषु मणिलाल एव सर्वाधिकदार्ढ्यसंपन्नो भवति। एवमुल्लाघताप्राप्तिः श्रीराम-प्रसादात् उत जलचिकित्सावलादाहोस्वित्पथ्यशुश्रूषाभ्यामिति वक्तुं को नाम शक्नुयात्। निजनिजश्रद्धानुरूपं सर्वोऽपि निर्णेतुमर्हति। अहं तावज्जगदीश्वरेण मम मानो रक्षित इति दृढं व्यवसिषम्। अद्यापि तथैव विश्वासः॥

## त्रयोविंशोऽध्यायः

# दक्षिणाफ्रिकादेशं प्रति पुनर्गमनम्

**म**णिलालस्तावदुल्लाघः संवृत्तः। किन्तु गिरगांवस्थले गृहं वासयोग्यं न भवतीति मया-वगतम्। तद्गृहं न केवलमनूपप्रदेशे निविष्टमपि तु भूयसा निषिद्धसूर्यप्रकाशमासीत्। तस्मादहं रेवाशंकरजगजीवनमहाशयस्य सूचनामङ्गीकृत्य मोहमयीनगरस्य बाह्यवसतिप्रदेशे हर्म्यमेकं भाटिकया ग्रहीतुं निरचैषम्। 'बांद्रा—सांताक्रूज' इत्यनयोः नगरविभागयोः वसत्यर्थमन्वेषणमकार्षम्। बांद्रास्थले गोघ्नकौठिकापणस्य विद्यमानत्वात्तत्र नो वसतिग्रहणं नारोचत। घाटकोपरप्रभृतिस्थलानि समुद्राददतिदूरवर्तीनि मे प्रत्यभात्। पर्यन्ते सान्ताक्रूजविभागे रमणीयमेकं हर्म्यमलभ्यत। आरोग्यदृष्ट्या तदत्युत्तमं मन्वाना भाटकेनाग्रहीष्म॥

सान्ताक्रूजस्थलाच्चर्चगेटलोहाश्वनिकेतनं गन्तुं प्रथमश्रेणीप्रात्याहिकप्रयाणानुज्ञापत्रमक्रैषम्। अनेकशो धूमशकट्याः प्रथमश्रेण्यामहं एक एव स्थित इति मम कोऽप्यभिमानो जायते स्मेति स्मरामि। बांद्राप्रदेशाच्चर्चगेटनिकेतनं प्रति निःसत्कमभिचलंत्या धूमशकट्या प्रयातुमिच्छुरनेकशः सान्ताक्रूजस्थलाद्बांद्रायोश्वनिकेतनं पादचारेणैवागमम्॥

मम व्यवहारवृत्त्युपजीवनं निरीक्षितादत्यधिकतरसंमृद्ध्युपेतमासीत् । दक्षिणाफ्रिकादेश्या मदीयव्यवहारिणो बहुशः कार्याणि मत्सविधं प्रैषयन् । एतानि मम जीविकासिद्धये पर्याप्नुवन् ॥

प्रधानन्यायसभायां चालनीयं कार्यमद्यापि मे नामिलत् । तथापि तत्र प्रचलतां चर्चनीयविषयोपन्यासानां श्रवणाय मया गम्यते स्म । तत्र गोष्ठ्यां प्रवेष्टुं न मे धैर्यमासीत् । तत्र जमियतरामनानाभाईमहाशयः प्रमुखपात्रं वहति स्मेति मम ज्ञप्तिरस्ति । यथान्य उत्तरवादिनस्तथाहमपि व्यवहारगतिं दिदृक्षुर्न्यायसभामगमम् ॥

तत्र मया ज्ञानमर्जितुं न गम्यते स्म । परंतु सागरादुपस्यन्दमानस्य सुषुप्सामुत्पादयतो मन्दमारुतस्य सेवनेनानंदमनुभवितुमिति वक्तव्यम् । ईदृक्सुखमनुबुभूषुर्नाहमेक एवेत्यवगतवतो मम न लज्जा समजनि । एवं घूर्णमानेन तत्रोपवेशः कश्चिद्विलासो न तु लज्जाकर इत्यहमचिन्तयम् ॥

प्रधानन्यायस्थानस्य पुस्तकालयमुपयोक्तुमहं प्रवृत्तः इतरैर्बहुशः परिचयं समपादयम् । अचिरेणैव प्रधानन्यायसभायां व्यवहारं चालयेयमित्याशा मे समजनि ॥

इत्थमेकतो न्यायवादिवृत्तिं प्रति निश्चिन्ते मय्यन्यतो गोखलेमहाशयस्य दृष्टिर्मयि जागर्ति स्म । स किल निरन्तरमायत्यां यन्मया कर्तव्यं तस्यानुसंधानपरोऽभवत् । प्रतिसप्ताहं द्वित्रवारं मम कार्यालयमागत्य मदीययोगक्षेमं पृच्छति स्म । कदाचिन्मित्रैः सहागम्य तत्परिचयं मामकारयत् । स्वस्य कार्यविधानरीतिं च मामुपादिशत् ॥

किन्तु भविष्यं प्रति मया मनस्याकलितानां मनोरथानामेकस्यापि सिद्धिं मां भगवान्न प्रापयेदितिवचनमयथार्थं न भवेत् । ते किल सर्वेऽपि तदिच्छानुरूपमेव पर्यणमन्त ॥

यावदहं तत्रैव स्थिरवासं निश्चित्य स्वास्थ्यमीषत्प्राप्तुकामः स्थितः तावद्दक्षिणाफ्रिकादेशादतर्कितमेवागमत्तंत्रीसंदेशो यथा — "इह 'चेम्बरलेन' मन्त्री समागन्ता । एतत्क्षणमेव प्रस्थाय भवद्भिरागंतव्यमिति" कृतां प्रतिज्ञामहं व्यस्मार्षम् । तथा च तंत्रीप्रतिवचनं मया प्राहायि । यावत्पणं मां प्रापयिष्यथ तावदितः प्रस्थातुं सज्जस्थितोऽस्मीति । तत्क्षणमेव ते पणं प्राहैषुः । अथाहं कार्यालयं बद्धकवाटं विधाय दक्षिणाफ्रिकादेशमगमम् ॥

मदीयकार्यमन्यूनमेकवत्सरमपेक्षत इति मत्वा गृहमत्यजन् भार्यापत्यादिकुटुम्बं तत्रैवात्रासयम् ॥ ये तु स्वदेशेऽनधिगतयोग्यवृत्तयः साहसिका युवकास्ते विदेशाः समाश्रयणीया इति तदानीं मदीयमतमासीत् । इदानीमप्यसौ तथैव वर्तते । तत्र पूर्वपद्धतिं विहाय विदेशगमने धीरमनसो ये युवकास्तेषामन्वेषणे ममासीदभिलाषः । मम पित्रा बहवो राजकीयोद्योगे प्रावर्त्यन्त । ते सर्वेऽप्येवंविधात्सेवावृत्तिरूपान्मायाजालान्मोचयितव्या इति ममाशयोऽभूत । वृत्त्यन्तरं प्रापयितुं मम सामर्थ्यमासीदिति न खलु मे विवक्षा । अथ सत्यामपि शक्तौ तदेतन्नमे रोचते स्म । तैः स्वावलंबिभिर्भाव्यमिति हि ममाभिलाषः ॥

यथा यथा ममादर्शाः सिद्धिपथमागतास्तथा तथाहमेषां युवकानामादर्शानपि यथावत्परिवर्तयितुमयतिषि । एतेषां मगनलालगांधौ मम यत्नो भूयसा साफल्यमगात् ॥

भार्यापत्यानां परित्यागः व्यवस्थितकुटुंबस्य विभजनं निश्चितावस्थितिं विहायानिश्चिताया-मवस्थायां प्रवेश इत्येतत्सर्वं मां क्षणमात्रमव्यथयत् । किन्त्वहमनिश्चितजीवनाभ्यासे परिक्षुण्णोऽ-भवम् । अस्मिन् जगति तमेकं विना—स तावदीश्वर इति वा सत्यमिति वा व्यपदिश्यताम्—निश्चितस्वरूपं न किंचिदस्ति । इह निश्चितत्वप्रेप्सापि दोष एवेति मन्ये । अद्यास्मान्परितः परिदृश्यमानं प्रवर्तमानं च सर्वमप्यनिश्चितमनित्यं च । किन्तु सर्वान्तर्यामितया गूढं परमतत्वमेकं निश्चितरूपेण तिष्ठति । तत्प्रकाशस्य मयूख एकस्मिन्नस्मदुपरि पतिते सति तत्रास्मदात्मनः समर्पणं कृत्वा जीवितसार्थक्यमाप्स्यामः । तस्य सत्यस्यान्वेषणमेव परमः पुरुषार्थः ॥

डरबननगरमहं नियतकालादेकाहपूर्वमपि नासादयम् । तत्र यावदहं गतस्तावन्मां कार्यं प्रतीक्षते स्म । हिन्दुजनप्रतिनिधिभिश्चेम्बरलेनमहाशयस्य दर्शनाय दिवसात्प्रागेव स्थापितं तदग्रे यद्वाचयितव्यं तत्प्रार्थनापत्रं सज्जीकृत्य मया दर्शनार्थिभिः प्रतिनिधिभिः सह गन्तव्यमासीत् ॥

इति श्रीगांधिमहात्मनः
सत्यशोधनाख्यायामात्मकथायां
तृतीयो भागः
समाप्तः

# कृतं सर्वं वृथां जातम्

**चेम्बरलेनमहाशयो** दक्षिणाफ्रिकादेशात्सुवर्णमुद्राणां सार्धकोटित्रयस्य दानं प्रतिगृह्य गन्तुमागतोऽभूत् । किं चाङ्ग्लेयानां सति संभवे 'बोअर' जनानां च मनःसंवननमपि तस्योद्देश्यमासीत् । अत एव हिन्दुजनप्रतिनिधयस्तस्माच्छुष्कमेव प्रतिवचनमलभन्त ॥

तेन किलैवं प्रत्यवाचि—

विदितमेव खल्विदं वो यत्स्वतंत्रस्वास्थ्यानामुपरि साम्राज्याधिकृतानामधिकारो नाम नाममात्रत एवेति । युष्मदीयानि संकटानि तावत्पारमार्थिकानि प्रतिभान्ति । यावच्छक्यमहं करिष्ये । किन्तु यूयं गौराङ्गानां मध्ये तिष्ठासवश्चेद्युष्माभिरमी यत्नतः परितोषणीया—इति ॥

प्रत्युत्तरमिदं सद्यः प्रतिनिधीनां मुखेषु शीतोदकप्रक्षेप इवाचरत् । अहमपि निराशोऽभवम् । अनेनास्मन्नेत्रबंधो मोचितोऽभवत् । लक्षितं च मया यदादितः प्रभृति कार्यमिदं प्रारम्भणीयमिति ॥

चेम्बरलेनमहाशयस्य प्रतिवचने वा को दोषः । तेन हि यथास्थितमेव वस्तु वर्णितम् । तच्च नः शोभनमेव वस्तु संवृत्तम् । बाहुबलमेव न्यायस्य मूलम् । अथवा दण्डकाष्ठस्य प्रयोग एव सर्वार्थसाधक इतीदं तत्त्वमसौ मधुरोक्तिभिरस्मद्बुद्धिगोचरमानयत् ॥

किंत्वस्माकं दण्डकाष्ठस्य लाभः कुतः संभवी । दण्डप्रहारसहनशक्तिरप्यस्माकं नासीत् ॥

दक्षिणाफ्रिकादेशे सप्ताहमात्रमेव स्थातव्यमिति चेम्बरलेनमहाशयेन निश्चितमासीत् । दक्षिणाफ्रिकादेशो नाम न खल्वल्पमितः प्रदेशः । स एको महान् विषयः । श्रीनगरात्कन्याकुमार्या यद्येकोनविंशतिपाषाणदूरं तर्हि 'डरबन' नगरात् 'केपटाउन'पत्तनमन्येनेकादशपाषाणदूरे वर्तते । तन्मध्यगतो विस्तारः सर्वोऽपि चेंबरलेनमहाशयेन वायुवेगतः संचरितव्य आसीत् ॥

असौ नातालदेशात् ट्रान्सवालदेशं प्रति प्रातिष्ठत । तत्कालं मयापि तत्र गत्वा तत्रत्यानां भारतीयानां कृते तस्याग्रे भाषणं कर्तव्यमासीत् । किन्तु प्रिटोरियानगरं मया कथमासादनीयम् । तत्र सकालमुपस्थातुमावश्यकी या व्यवस्था तां निर्वोढुमशक्ता आसन्नस्मदीया जनाः । युद्धोत्तरकाले ट्रान्सवालदेशो निर्जनारण्यमिवादृश्यत । अशनवसनार्था सामग्री तत्र दुर्लभासीत् । युद्धकाले शून्यीकृतापिहितद्वारा वा निपद्यास्ताः पुनरुद्घाटनीया आसन् । तदेतत्कार्यं तु कालक्रमेण निर्वर्तनीयं न पुनरेकदैव साध्यमासीत् । गृहादिकं परित्यज्य पलायितानामपि स्वस्वगृहप्रापणं तदापणेषु संभारप्रापणोत्तरमेव कर्तव्यमासीत् । अत एव ट्रान्सवालवासिना सर्वेणापि प्रतिस्वमेकैकमनुज्ञापत्रं संपादनीयमासीत् । तच्च गौराङ्गाः क्लेशं विनैवालभन्त । भारतीयानां तु तदतीव दुर्लभमासीत् ॥

हिन्दुस्थानात् 'लंका 'द्वीपाच्च युद्धाय दक्षिणाफ्रिकामागता अधिकारिणः सैनिकाश्च बहवोऽविद्यन्त । तेषु यश्च यश्च तत्रैव निवासग्रहणमरोचयत्तस्य तस्य तत्रैवं निवासायाङ्ग्लाधिकारिभिः समुचिता व्यवस्था कर्तव्याभवत् । अधिकारिणां नवीनमण्डलमेकं तदानीमवश्यमेव प्रतिष्ठापयितव्यमासीत् । तदर्थमेषामनुभवशालिनामधिकारिणां संनिधिः परमुपकारक एव संवृत्तः । तैश्च तीव्रबुद्धिबलेनैका नूतना कार्यनिर्वाहशाखैव निरमीयत । इदं तदीयचातुर्यमपि प्राकाशयत् । आसीत्किल 'नीग्रो 'जनार्थे पूर्वमेवैका कार्यनिर्वाहशाखा । तस्मादेशियाखण्डवासिनामर्थेऽप्येतादृशेनैकेन विभागेन कुतो न भाव्यम् । तर्कस्यास्य नासीत्कोऽपि प्रत्यवस्थाता । यावदहं तत्र प्राप्तस्तावदयं विभागो निर्मितः स्थितः । किं चायं स्ववागुरां शनैः प्रकाशयति स्म । देशभ्रष्टेभ्यः पुनः स्वदेशे प्रवेशमिच्छद्भ्यो यैरधिकारिभिरनुज्ञा दीयते स्म तैरेव सर्वेभ्योऽपि निर्विशेषमनुज्ञाप्रदानं सुकरमासीत् । परन्तु नव्यशाखाया माध्यस्थ्यमन्तरेण कथमेते 'एशिया 'वासिभ्योऽनुज्ञां दातुं शक्नुयुः । नव्यशाखया कृतस्य प्रशस्तिवचनस्य बलादनुज्ञा यदि दीयेत तदा स्वेषामनुयोज्यता स्वल्पी भवेत् । कार्यं च लघु संपद्येतेति हि तैर्वितर्कितम् । भूतार्थस्त्वन्यः । नव्यशाखायाः किल यत्किमपि कार्यमावश्यकम् । तच्छाखाप्रविष्टानामपि द्रव्यमावश्यकम् । कार्याभावे तु निरर्थकोऽयं विभाग इत्यात्मविनाशः संभवेत् । अत एव तच्छाखीयाः स्वकार्यं स्वयमेवेत्थमकल्पयन् ॥

अनुज्ञाप्राप्तये भारतीयैः सैषा शाखा प्रार्थनीयाभवत् । प्रार्थनापत्रस्य तु बहोः कालादुत्तरमायाति स्म । ट्रान्सवालदेशं प्रति जिगमिषूणां संख्या महत्यासीत् । अतो माध्यस्थ्यकाराणां संघ एकः 'समुद्भूयाधिकारिवर्गमनुप्रविश्य दीनभारतीयेभ्यः परःसहस्ररूप्यकान् लुंठयन्ति स्म । प्रशस्तिं विनानुज्ञापत्रस्य दुर्लभत्वं कदाचित्सत्यामपि प्रशस्तौ परःशतानां सुवर्णमुद्राणामवश्यप्रदेयत्वं च मामचकथन् । एवं स्थिते कार्यगतिः सर्वतः प्रतिबद्धालक्ष्यत ॥

अथाहं मदीयपूर्वमित्रं रक्षिजनपर्यवेक्षकमुपसृत्य व्यजिज्ञपम्—अनुज्ञाप्रदातृणामधिकारिणां परिचयं मे संपाद्य मह्यमेकमनुज्ञापत्रं दापयितुमर्हन्ति भवन्तः । विदितमेव भवतां यदहं ट्रान्सवालदेशे स्थितपूर्वो जन इति । तत्क्षणमेवासौ शिरसि शीर्षकं निधाय मया सह प्रस्थितो मह्यमनुज्ञापत्रमदापयत् । धूमशकटीप्रस्थानात्पूर्वमेकहोरावकाशोऽपि नालभ्यत । किंत्वहं प्रास्थानिकं पूर्वमेव सज्जीकृत्य स्थितः । अथाहं रक्षिपर्यवेक्षकाय मदीयकृतज्ञतां निवेद्य प्रिटोरियानगरं प्रास्थिषि ॥

अचिरात्संभाविनः क्लेशास्तदानीं मे स्पष्टतया बुद्धिगोचरमवतीर्णाः प्रिटोरियानगरं प्राप्य प्रार्थनापत्रमेकमलेखिषम् । डरबननगरे भारतीयैः स्वप्रतिनिधीनां नामानि पूर्वमेव निवेदयितव्यानीति विद्यमानं कमपि नियमं नाहं स्मरामि । तथाप्यत्र नवीनशाखा स्वकार्यं निर्वहन्ती पूर्वमेव प्रतिनिधीनां नामानि व्यचारयत् । प्रिटोरियावर्तिनां भारतीयानां प्रागेव विदितमासीत्

यदेतेऽधिकारिणः चेंबरलेनमहाशयेन मम संसर्गं निवारयितुमैच्छन्निति। विषादकार्यपि विनोदावहेयं कथा प्रकरणान्तरे निरूपणीया भवति॥

द्वितीयोऽध्यायः

# एशियाखंडादागता निरङ्कुशाधिकारिणः

नवशाखाया मुख्याधिकारिणः कथमहं ट्रान्सवालदेशं प्रविष्ट इत्यस्य मर्म नावेदिषुः। स्वसंनिधिमुपसर्पतो भारतीयानभ्यपृच्छन्। किन्तु तत्सकाशाद्वास्तवो वृत्तान्तस्तैर्नावगतः। अतस्ते व्यतर्कयन्त–अनेन पूर्वपरिचयबलादनुज्ञापत्रमन्तरेणैव ट्रान्सवालदेशं प्रविष्टेन भाव्यमिति। ऊहस्यास्य सत्यत्वे सति नूनमहं व्यतिक्रमस्य कृते निरोद्धव्यः स्याम्॥

महायुद्धावसानोत्तरं कियन्तमपि कालं राज्याधिकृतानामधिकारविशेषप्रदानसंप्रदायः सर्वत्र प्रचरति। दक्षिणाफ्रिकादेशेऽप्येवमेव संवृत्तम्। शान्तिप्रतिष्ठापनाय राज्याधिकारेण कश्चिन्नियमः प्रचारितोऽभूत्। तन्नियमानुरोधेन ट्रान्सवालदेशे येऽननुज्ञातप्रवेशास्तेऽवष्टभ्य बंदिनः क्रियेरन्। तथा चाहमासेद्धव्य इति चर्चा प्रवृत्ता। किंत्वनुज्ञापत्रं दर्शयेति मां प्रष्टुं न कोऽपि धैर्यमकरोत्॥

अधिकारिभिस्तन्त्रीसंदेशः पूर्वमेव डरबननगरं प्रति प्रेषित आसीत्। किन्तु लब्धानुज्ञ एवाहमिति ज्ञात्वा भग्नाशा बभूवुः। तथापि तावतैव पराजयमङ्गीकर्तुं न तेऽरोचयन्त। यद्यप्यहं ट्रान्सवालदेशप्रदेशे जयमापं तथापि चेंबरलेनमहाशयस्य दर्शनान्मां वारयित्वा पराजितं कर्तुं शक्नुयुः किल॥

अत एव प्रतिनिधित्वमङ्गीकृत्य, चेंबरलेनमहाशयस्य संनिधिं जिगमिषूणां नामानि ते पूर्वमेवापृच्छत्। वर्णद्वेषो दक्षिणाफ्रिकादेशे यद्यपि सर्वतः प्रत्यक्षीभवति स्म तथापि हिन्दुस्थान इवात्राप्यधिकारिवर्गो नीचां गुप्तगतिमवलम्ब्य प्रवर्तत इति नाहमाकलयम्। दक्षिणाफ्रिकादेशे कार्यशाखाः प्रजाक्षेमाय प्रतिष्ठापिताभूवन्। किं च लोकमतेन नेतव्यासन्। अत एव तत्रत्यानामधिकारिणां वर्गे कापि सभ्यवृत्तिर्नम्रता च दृश्येते स्म। अनेन न केवलं गौरांगा अपि त्वन्येऽपि जना यथार्हतो लाभमाप्नुवन्। एशियाखंडादागतैरधिकारिभिः सहैव तेषां निरंकुशाधिकारो विशृंखलाः प्रवृत्तयश्चात्रापि पदमकुर्वन्। दक्षिणाफ्रिकादेशे प्रजाप्रतिनिधिप्रभुत्वविशेषः कश्चिदासीत्। परंत्वेशियाखंडादमीभिरानीतः संभारः केवलं निरंकुशप्रभुत्वमेव। यदेशियावर्तिषु जनेषु नहि प्रजाप्रतिनिधिप्रभुत्वमासीत्। ते किल विदेशीयैः शास्यन्ते स्म।

दक्षिणाफ्रिकावर्तिनो ये गौराङ्गास्ते देशान्तरादागत्य तत्र बद्धस्थितयोजनाः। ते च तस्य देशस्य प्रजा भूत्वा राजकीयानधिकारिणो नियमयन्ति स्म। यदा पुनरेशियाखंडान्निरंकुशप्रभव आगत्य स्वागमनेन देशमन्वगृह्णस्तदाप्रभृति भारतीयानां स्थितिरेकतो भूसर्पस्यान्यतो जलनक्रस्य च मध्ये क्लिश्यतो मंदभागस्योभयसंकटग्रस्ततामनुहरति ॥

अस्य निरंकुशवर्तनस्य प्रभावो यथांशं मामप्याक्रमीत्। मया पूर्वं तच्छाखामुख्याधिकारी (अयं लंकाद्वीपादागतः) द्रष्टव्य इत्याज्ञा प्रावर्तत। आज्ञेति यत्पदं मया प्रयुक्तं तदुत्प्रेक्षात्वेन मा स्म ग्राहीति प्रकृतमर्थं इतोऽपि स्पष्टतरमभिधास्ये। आज्ञा तावत्पत्रमारोप्य न मे प्रेषिताभूत्। भारतीयप्रमुखैरेतच्छाखाधिकारिणां दर्शनमसकृत् क्रियते स्म। तेषु तैयब-हाजी-खानमहमद-शेठ-महाशयोऽप्येकः। मामुद्दिश्य शाखामुख्याधिकारी तमपृच्छत्—कोऽयम्। किं निमित्त-मिहागत इति ॥

तैयबशेठः प्राह—अयमस्मदीयो मन्त्रालोचकः। अस्माभिराहूतत्वादिहागतो भवतीति ॥

अथ पुनः स प्रभुरपृच्छत्। यद्येवं तर्हि किमर्थमेते वयमत्र स्थिताः। ननु युष्मद्रक्षणायैव वयं नियोजिताः स्मः। अत्रत्याः स्थितिगतीर्गान्धिः किं वा जानीयादिति ॥

तैयबशेठमहाशयश्चास्याक्षेपस्य यथावत्समाधायकं प्रत्युत्तरमदाद्यथा—भवन्तस्तावन्नूनमत्र-स्थिताः। तथापि गांधिरस्मदीयः। जानात्ययमस्मदीयां भाषाम्। जानात्यस्मदीयं मनः। भवन्त-स्तावदधिकारवर्गे प्रविष्टा इति। आनीयतामयमस्मत्समक्षमित्यधिकारी तैयबशेठमहाशयमाज्ञापयत्। तैयबशेठमहाशयेनेतरैश्च साकमहं तत्समीपमगमम्। उपविश्यतामित्यपि नास्मानयमवादीत्। वयं सर्वेऽपि स्थिता एव ॥

इह त्वं किमर्थमागतोऽसीति स प्रभुर्मामपृच्छत्। तदाहमवोचम्—मदीयैर्भारितीयैः सहोदरैराहूतः सन् तेभ्यः कार्यगतिप्रदर्शनपूर्वकं साहाय्यं चिकीर्षुरिहागतोऽस्मीति ॥

अथासौ मामकथयत्—ननु त्वमिहागन्तुमनधिकारीति किं न वेत्सि। तव प्रदत्त-मनुज्ञापत्रमदेयमपि बुद्धिदोषात्प्रदत्तं भवति। त्वमत्रत्यो भारतीय इति गणयितुं न शक्यते। त्वया परावर्तितव्यम्। त्वया चेंबरलेनमहोदयो न द्रष्टव्यः। भारतीयानां रक्षणार्थमेवैशियाशाखात्र प्रतिष्ठापिता भवति। स्वस्ति गम्यतां तर्हीति। एवं ब्रुवाणः प्रत्युत्तरस्याप्यवकाशमदत्त्वा मां व्यसर्जयत्। मत्सहागतास्तु स्थापयित्वा वलवत्तानुपालभ्य सर्वथा परावर्त्यतामयमित्यबोधयत् ॥

अधोमुखास्ते प्रतिन्यवृत्तन्। इत्थमस्मानतर्कितैका घटना समुपानमत् ॥

## तृतीयोऽध्यायः

# अपमाननिगिरणम्

**अ**नेनापमानेन परमहं दुःखितोऽभवम्। किन्तु तादृशापमानस्य पूर्वमसकृन्मया निगीर्णत्वात्तत्सहनमिदानीमभ्यासबलात्सुकरमासीत्। अपमानमेनं निगीर्य प्रसङ्गेऽस्मिन्निष्पक्षपातदृष्ट्या सूच्यमानं कर्तव्यमार्गमनुसरेयमिति निश्चयमकार्षम्॥

पूर्वोक्तादधिकारिणः सकाशादेकं पत्रमभ्यागतम्। तत्रैवं लिखितमासीद्यथा—आर्येण गांधिना पूर्वमेव डरबननगरे दृष्टः सतः प्रतिनिधीनां श्रेण्यास्तन्नामधेयमवश्यं निष्कासनीयं मन्यामह इति॥

पत्रमिदं मदीयसहचराणां दुःसहमासीत्। प्रतिनिधयो नैव प्रेषणीया इत्यमी स्वाभिप्रायमवदन्। तदनु मयास्मदीयजनानां कष्टा परिस्थितिस्तेभ्य उपावर्णि। अथ च प्रावोचम्—यदि यूयं चेंबरलेनमहाशयं न द्रक्ष्यथ तदात्र युष्माकं न किमपि कष्टं विद्यत इत्यसौ मन्येत। अपि च यावद्विवक्षितं तावल्लिखित्वैव प्रदातव्यम्। तच्च सज्जस्थितमेव। तदेतन्मया किं पठितव्यमन्येन वेत्ययं विचारो न मुख्यः। चेंबरलेनमहाशयस्तावद्विषयमिमं सहास्माभिर्न चर्चयिष्यते। मद्विषयोऽपमानः सोढव्योऽस्माभिरिति मे प्रतिभातीति॥

असमाप्तवचन एव मयि तैयबजीमहाशयोऽब्रवीत्। ननु भवद्विषयोऽपमानः सर्वेषां नः समान एव। भवानस्मत्प्रतिनिधिरिति कथं वा विस्मरणीयमिति॥

अहमवोचम्—भवद्भिरुक्तं संगतमेव। किन्तु तादृशोऽपमानोऽस्मत्पक्षीयैरपि निगरीतव्यः। नन्वत्र किमुपायान्तरमस्तीति॥

अथ तैयबशेठमहाशयोऽपृच्छत्। यद्भवतु बोधं बोधं कुतोऽस्माभिः स्वयमेवात्मन्यपमानो भूयः पातयितव्यः। अस्मदीया परिस्थितिरद्यत्वापेक्षया निकृष्टतरा न खलु संपद्येत। अधिकारस्तावत्को वास्माकमिदानीं विद्यते यस्यापहारं वयं शङ्केमहीति॥

आवेशपूरितमिदमुत्तरं मे संमतमासीत्। किंत्वेतदकिंचित्करमिदानीमिति च मया सम्यग्ज्ञातम्। अस्मदीयपक्षस्य योग्यतापरिमितिः किल मे सम्यगनुभवसिद्धा। अतोऽहं सुहृदः समाधाय मदीयस्थाने जॉर्जगॉडफ्रेमहाशयो नेतव्य इत्यसूचयम्। जॉर्जगॉडफ्रेमहाशयस्तावदेको भारतीयब्यारिस्टरमहाशयः॥

गॉडफ्रेमहाशयः प्रतिनिधीनामग्रेसरो भूत्वा चेंबरलेनमहाशयस्य संनिधिमगमत्। प्रतिवचनप्रसंगे चेंबरलेनमहाशयो मद्विषयकं प्रवेशनिषेधमधिकृत्य एवं किल बभाषे—वारंवारं एकस्यैव प्रतिनिधेः परिग्रहापेक्षया नवनवैर्जनैः समागमः प्रशस्तः किलेति। एवमादिभिर्वाक्यैर्मदपमानक्षतसंतापं शमयितुमसौ यत्नमकरोत्। किंत्वेतेनास्मत्समाजस्य मम च कार्यं न तावत्समाप्तं परमितोऽप्यधिकमजनि। यतः पुनरादितः प्रारंभणीयमासीत्॥

भवदाज्ञानुरोधेनैव अस्मदीयजना युद्धे साहाय्यं चक्रुः । इदानीं परीक्ष्यमाणे तस्य परिणामोऽयं किल जातः । एवं रीत्या मां कतिपये निनिन्दुः । परन्तु मामेतन्नैवास्पृशत् । तत्कृते नाहमिदानीं विषीदामि । युद्धे मेलनाद्वयं साधु कृत्यमकार्ष्मेत्यद्यापि साधयामि । तेनास्माभिरस्मत्कर्तव्यं कृतं न किञ्चिदन्यत् । अस्मत्कार्यफललाभेन खलु प्रत्याशा धारणीया । किन्तु सत्कार्यस्य फलं सदैव जायत इत्यस्ति मे दृढः प्रत्ययः । अपि च व्यतीतविषयाणामालोचनापेक्षया भाविकर्तव्यं किमित्यालोचयितुमावश्यकं भवति । तस्मादागम्यताम् । एतद्विचारमेवालोचयाम इत्यहमवोचम् ॥

अस्य सर्वेऽपि स्वसंमतिं ददुः । अहं पुनरुक्तवान् यथा — सम्यक्परिदृश्यमाने यत्कार्यमुपदिश्य यूयं मामिहाहूतवन्तः तत्कार्यमिदानीमवसितमित्येव वक्तव्यम् । किन्तु यूयं ममाज्ञादायिनोऽपि यावच्छक्यमहं ट्रान्सवालपत्तनं परित्यज्य न गन्तव्यमिति विश्वसिमि । इतः परं मया मदीयकार्यं नातालपेक्षयेत एव चालनीयम् । हिन्दुस्थानं प्रति वर्षाभ्यन्तरे निवर्तनविचारं परित्यज्यात्रैव न्यायवादिकार्यं कर्तुमनुज्ञापत्रमधिगन्तुं प्रयतितव्यम् । एतां नवीनसंस्था प्रतिभटीकर्तुं श्रद्धा ममास्त्येव । यद्यस्माभिर्न प्रत्यवस्थीयेत तदास्मदीयजनानितो निष्कास्येतापि च लुंठ्येत । प्रतिदिनमस्मदीयसमाजस्थजनानां नवं नवमपमानं प्राप्य तत्परिस्थितिरितोऽपि हीयते । चेंबरलेनमहाशयस्य मां द्रष्टुं निराकृतिस्तदधिकारिणा कृतो ममापमान एतत्सर्वमल्पं भाविनोऽपमानस्याग्रतः । गौरांगानामिच्छानुरोधेन कार्यं हेयजीवनं सोढुमशक्यमिति ॥

इत्थमहं कथालापं कर्तुं प्रारभ्य प्रिटोरिया-जोहानिसबर्गप्रदेशयोर्मुख्यमुख्यभारतीयैः सह चर्चयित्वा पर्यन्ते जोहानिसबर्गनगरे कार्यालयं प्रतिष्ठापयितुं निश्चयमकार्षम् ॥

ट्रान्सवालदेशे न्यायवादिकार्यार्थेऽनुज्ञापत्रप्राप्तिः संशयिताभूत् । किन्तु तत्रत्या न्यायवादिमंडली मम प्रार्थनपत्रिकां न प्रत्यवातिष्ठत । तत्रत्यं मुख्यन्यायस्थानं ममानुज्ञां ददौ । भारतीयानां कार्यालयस्यार्थे साधुप्रदेशे मंदिराधिगमोऽपि दुर्लभ आसीत् । श्री. रीचमहाशयस्तत्र वाणिज्यकर्ता मम सम्यक् परिचित आसीत् । तस्य विदितस्य कस्यचिद्गृहप्रापकस्य मुखेन साधुप्रदेशे मन्दिरमेकं मम कार्यालयार्थे संपाद्य न्यायवादिकार्यं मया प्रारब्धमासीत् ॥

## चतुर्थोऽध्यायः

# कार्यविधानशीघ्रभावः

ट्रान्सवालप्रदेशे हिन्दुनिवासिनां स्वाधिकाररक्षणायैशियासंबन्धिसंस्थया सह क्रियमाणकार्यार्थं च यः कोलाहलः कृतस्तद्विषयकाभिधानात्पूर्वमेव मदीयजीवनस्य कतिचिद्दशान्प्रति दृष्टिर्देया भवति ॥

एतावत्पर्यन्तं मय्यभिलाषः संकीर्ण आसीत्। यत्किंचिद्भविष्यलाभे दृष्टिं रक्षित्वा सोऽभिलाषो मन्दीकृतोऽभूत्। परमार्थेन सह स्वार्थोऽपि मिलितोऽभूत्। मोहमयीनगरे यदाहं कार्यालयं प्रतिष्ठाय स्थितवान् तदामेरिकादेशात् सौम्यदृष्टिः साधुजिह्वश्चैकः 'इन्श्युरन्स-एजन्ट' पुरुषः समागतोऽभूत्। पुराणः सुहृदिव मया सह भाविनं योगक्षेमं विचारितवान्। अमेरिका-निवासिनो भवादृशाः सर्वे जीवितरक्षार्थं यत्नमकार्षुः। भवानपि भविष्यदृष्ट्या रक्षां कर्तुं युज्यते खलु। विनश्वरमिदं जीवितम्। अमेरिकादेशः सर्वोऽपि भविष्यरक्षां स्वधर्मं मन्यते। भवानप्येक-मल्पं रक्षापत्रं ग्रहीतुं योग्य एव॥

अद्यपर्यन्तं दक्षिणाफ्रिकाहिन्दुस्थानयोर्ये 'इन्श्युरन्स-एजेंट' नामकाः मया दृष्टास्तेष्वह-मुदासीनप्रायः समभवम्। यतः 'इन्श्युरेन्स' नाम भयं भगवत्यविश्वास इत्यमंसि। किन्तु सांप्रतं अमेरिका 'एजन्ट'स्य प्रेरणया वशीकृतः पर्यालोचयं यथा—मम मानस्यां दृष्टौ भार्या-पुत्राणां चित्रं प्रादुरासीत्। आत्मानमवोचम्—मानवभार्यायाः सर्वाणि भूषणानि विक्रीतवानसि। यदि किञ्चित्तव संभवेत्तस्याः पुत्राणां च संरक्षणभारस्तव भ्रातुरुपरि पतिष्यति। स खलु पितृ-स्थानमास्थाय स्थितः। मन्यस्व कथमेतत्तवोपरि स्यात्। एभिरात्मानुवादप्रवादैरात्मानं समाधाय दशसाहस्ररूप्यकाणां पत्रमेकमग्रहीषम्॥

किन्तु दक्षिणाफ्रिकायां यदा मे जीवनप्रकारो भिन्नभिन्नोऽभूत्तदा मम दृष्टिश्च भिन्नासीत्। आधुनिकविचारकाले मया ये तु क्रमा अङ्गीकृतास्ते सर्वे भगवन्नामविश्वासेन तत्सेवार्थं च कृता आसन्। दक्षिणाफ्रिकादेशे कियच्चिरं मया स्थातव्यमिति नाहमशासिषम्। हिन्दुस्थानं प्रति न पुनरहं गच्छेयमित्यपि भयाकुलोऽभवम्। अतो मे भार्यां पुत्रांश्च मत्समीप एव स्थापयित्वा तद्रक्षणपर्याप्तं धनमर्जयितुं निरचैषम्। एवं निश्चिते 'इन्श्युरन्स पोलिसी' ग्रहणं मे नैव समुचितमासीदिति विचिन्त्य 'इन्श्युरन्स-एजन्टे'न प्रसारितवागुरायामहं पतित इति लज्जितोऽ-भवम्। आत्मनः स्वयमवोचम् यथा भ्राता नूनं यदि पितृस्थाने स्थितस्तदा यदि मे भार्या विधवा भवेत्तदा तस्यास्तत्पुत्राणां च रक्षणं नायं भारं मन्येत। केन कारणेनेतरेभ्यः पूर्वमेवाहं मृत्युवशो भविष्यामीति चिन्तनीयम्। वस्तुतः संरक्षको भगवान्। न चाहं न च मे भ्राता। 'इन्श्युरन्स'पत्रग्रहणेन भार्यायाः पुत्राणां च स्वाधीनचित्तता मया चोरिता भूत्। कस्मात्त एवात्मरक्षणं न कुर्युः। प्रपंचे निःसंख्यान्यकिंचनानि कुलानि विद्यन्ते। तेषां किं जातम्। तेषां मध्येऽहमप्येकोऽस्मीति कस्मान्न चिन्तनीयम्॥

ईदृशा बहवश्चिन्ता मनस्युदभवन्। किन्तु तत्क्षणमेवाहं न किंचिदकार्षम्। दक्षिणाफ्रिका-देशे सकृद्'इन्श्युरन्स'प्रदेयं धनं दत्तवानिति स्मरामि॥

बाह्याः संभवा अपीदृशचिन्तापथस्यानुकूला एवासन्। दक्षिणाफ्रिकादेशे मम प्रथमागमे ख्रिस्तानुयायिसंबन्ध एव मम धार्मिकीं बुद्धिमुज्जीव्यास्थापयत्। इदानीं पुनस्तस्य भागवतैः संबन्धो

बलं ददौ। रीचमहाशयः स्वयं भागवत आसीत्। स खलु मां जोहनिसवर्गप्रदेशीयभागवत-संघेन परिचितिमकारयत्। किन्तु तत्राहं सांघिको नाभवं यतो ममाभिप्राया भिन्नभिन्ना आसन्। परन्तु मे प्रायः समस्तभागवतजनैः संपर्को लब्धः। प्रतिदिनं तैः सह धर्मविषयं प्रति विचारो मे प्रवृत्तः। भागवताः स्वग्रन्था-पठन्ति स्म। कदाचिन्ममापि सभायां भाषणं कर्तुमवसरः समजनि। परस्परभ्रातृभावमास्थाय तस्य संवृद्धिकरणमेव भागवतधर्मस्य मुख्यो विषयः। एतदुद्देश्य बहवो विचाराः कृताः। सांघिकानां मतं स्वधर्मप्रतिकूलमदृश्यत यदा तदाहं सांघिकानां दोषानुदधाय्यम्। एतच्च सफलमासीत्। यतः स्वात्मविचारे तन्मनः समाचकर्षत्॥

पञ्चमोऽध्यायः

# आत्मविचारफलम्

त्रिनवत्यधिकाष्टादशशतमिते (१८९३) वत्सरे क्रिस्तमतानुयायिना सुहृज्जनेन सह परमसख्योपसंपर्को यदागतस्तदाहं केवलनूतन आसम्। ते सर्वेऽपि क्रैस्तमतमवलंबयितुं मां बहुधा प्रायतन्त। मया तावत्सर्वं विनीततया गौरवेण च विश्रुतमासीत्। तस्मिन्काले यावच्छक्यं हिन्दुमतं परिशीलयन्नितरेषां धर्मानवगन्तुं यत्नमकार्षम्॥

त्र्यधिकोत्तरोनविंशतिशतमिते (१९०३) वत्सरे परिस्थितिर्भिन्नाभूत्। भागवतमित्राणि निश्चितं मां स्वमतान्तराकृष्टुमयतन्त। किन्तु 'हिन्दुमतस्थान्मत्सकाशाद्यत्किंचित्संपादयितुं तथाकुर्वन्। भागवतधर्मसाहित्ये हिन्दुधर्मविषयाः संपूर्णाः सन्ति। अत एवैतेऽमन्यन्तोपयुक्तोऽहं भवेयमेतेषामिति। अहं स्पष्टमवोचम्—संस्कृताभ्यासो ममात्यल्पः। हिन्दुमूलग्रन्थानहं नापठिषम्। तेषां भाषान्तरावलोकनमप्यल्पिष्टमिति। पूर्वसंस्कारेषु पुनर्जन्मनि च श्रद्धालवस्ते। यत्किंचित्सा-हाय्यं मत्तो भवेदिति तेषां विश्वासः। अल्पमत्स्यानां मध्येऽहमेकः सामुद्रिको देवोऽस्मीत्यभावयम्। एभिर्मित्रैः सह स्वामिविवेकानन्दस्य राजयोगं पठितुं 'एम. एम. द्विवेदि' महाशयस्य राजयोगमन्यैः सह पठितुं च प्रारब्धवान्। पातञ्जलयोगसूत्रमेकेन भगवद्गीतां चान्यैः सह पठितुमुद्युक्तवान्॥

वयमन्वेषकसमितिं विधाय तत्र पठनानि क्रमेणाकार्ष्म। गीताग्रन्थः पूर्वमेकः समाकर्षति स्म। आसीदत्र मे महती श्रद्धा। इदानीं तत्र निमज्जनमावश्यकमिति मे विदितमासीत्। मन्निकटे एकद्विभाषान्तराण्यासन्। यान्याश्रित्य मूलसंस्कृतार्थमवगन्तुमैच्छम्। प्रत्यहमेकं वा द्वौ वा श्लोकान्कण्ठे कर्तुमुद्युक्तवान्। एतदर्थं प्रातःस्नानादिकस्य वेलामुपयोजित-

वान्। दंतधावनाय पंचदशनिमेषाः स्नानाय विंशतिरिति पंचत्रिंशन्निमेषकाल अस्मद्व्यापारे निरगात्। पूर्वतरं कार्यं पाश्चात्यरीत्या स्थित्वा कृतम्। अग्रेतनायां भित्तौ गीताश्लोका लिखिता आसन्। मम ज्ञापकशक्तिमुत्तेजयितुं तानपश्यन्। प्रात्याहिकं शिक्षाविभागं बुद्धिमारोप्य शिक्षितश्लोकानावर्तयितुमेतावान्कालः पर्याप्तोऽभूत्। इत्थं त्रयोदशाध्यायाः कण्ठे कृता इति स्मरामि ॥

किन्तु कार्यान्तरेण गीताशिक्षा त्याज्याप्यासीत्। सत्याग्रहविधानं तत्पोषणं च सर्वकालमग्रहीन्मनःप्रवृत्तिम्। द्वितीयमद्यापि चलत्येव ॥

किं फलमेष गीतापाठो मित्राणामदादिति त एव वक्तुं समर्थाः। मम तावदेषा गीता निर्दोषनीतिमार्गशिक्षणी प्रात्यहिकशब्दकोषश्च। यथा यथाज्ञातशब्दानामर्थविज्ञानायाङ्ग्लशब्दकोशं पश्यामि तथा तथा सर्वक्लेशसंकटानां परिहारायेमां नीतिमार्गप्रदर्शिनीमवलोकये ॥

अपरिग्रहसमभावरूपाः शब्दाः मे मनसि निरूढिमागताः। कथमीदृशः समभावोऽभ्यसनीयः। कथं च रक्षणीय इति प्रश्नः प्रत्युत्तरणीयः। कथं निन्दकाः शोचका धनग्रहीतारश्च पुरा सहकारिणो भूत्वेदानीं पुनर्निरर्थकप्रतिरोधकर्तारश्च सर्वदा साधवः पुरुषाश्चेमे सर्वेऽपि कथं समभावेन गणनीयाः। कथं वा सर्वस्वपरित्यागः क्रियेत। न किं देह एवात्मनः स्वं भवति। भार्या पुत्राश्च न किं स्वं भवन्ति। मत्समीपस्थितपुस्तकभंडाराणि किं सर्वाणि विनाशनीयानि। मदीयमखिलं परित्यज्य स भगवाननुगन्तव्यः। अस्य प्रत्युत्तरमेकदा स्फुरति। मम सर्वस्यापि परित्यागं विना तमनुसर्तुं शक्यम्। आङ्ग्लन्यायशास्त्राभ्यासो मम साहाय्यमदात्। स्नेलमहाशयस्य न्यायचर्चा मम मानसमागता। 'ट्रस्टी'पदस्यार्थं गीतावचनैः प्रकाशितं पूर्वापेक्षया स्पष्टतरमज्ञासिषम्। आङ्ग्लन्यायशास्त्रे मम गौरवं ववृधे। तस्मिन् किल धर्ममालोकयम्। गीतास्वपरिग्रहो नाम 'ट्रस्टी'वद्वर्तनम्। मोक्षकामिनस्तथा भवेयुः। यद्यपि 'ट्रस्टी' सर्वपदार्थान्स्ववशे स्थापयति तथा च नियमाननुसृत्य पालयति किं तु तत्र न किञ्चिदपि स्वकीयं मन्यते। अपरिग्रहसमभावौ हृदयपरिवर्तनं मनःपरिशीलनं च पूर्ववर्तिनौ स्त इति दिवसप्रकाश इव मे स्पष्टमासीत्। रेवाशंकरभाईमहाशयं प्रत्यलिखं यज्जीवितरक्षापत्रमपयातु। यत्किंचिदितः प्राप्यं यदि लभ्यतां नो चेत्सकृद्दत्तं धनं नष्टं मन्यामहे यतो मदीयभार्यापुत्रान्योऽसृजत् स एवास्मद्रक्षणं करिष्यतीति। पितृस्थानस्थितं भ्रातरं प्रत्यलिखं यावदन्तिमक्षणपर्यन्तं संपादितस्थितं तावन्मया सर्वं तवार्पितम्। इतः परं किञ्चिदपि प्रदेयं नैव स्यात्। यतो भविष्यन्त्यर्जनानि यदि तावद् भवेयुस्तानि जनसमाजाय प्रदेयानि। भ्रातरं प्रति सौलभ्येनैतद्विदितं कर्तुं नाशकम्। स किल परुषया वाचा स्वं प्रति मम कर्तव्यमवोचत्। यथास्मत्पितुरपेक्षया बुद्धिमत्तरानात्मानं नैव मन्येत। संसाररक्षणमहमिव त्वं कुर्याः। यथास्मत्पिता करोति स्म तथैवाहं कुटुंबरक्षणं

करिष्यामि । कुटुंबशब्दस्यार्थविस्तरः कर्तव्यः । तदा मया कृतस्य कर्मणा बुद्धिमत्त्वं स्पष्टीभविष्यति ॥

भ्राता मां पर्यत्यजत् । पत्रव्यवहारानवर्जयत् । अहं नितरां विषण्णोऽभवम् । किन्त्विदं मे कर्तव्यमिति निश्चित्य प्रवर्ते । तत्परित्यागाद्विगुणतरं विषादमकरिष्यत् । किंत्वहं तावत्स्वल्पतरमङ्गीकृतवान् । तथापि मे भक्तिस्तस्मिन्निर्मला सातिशया च स्थिता । तस्य संकटस्य मयि तस्य महती प्रीतिरेव मूलम् । मम धने तावदसौ नैच्छत् । किन्तु कुटुंबस्य ममाचारेण साधुना भवितव्यमित्येतावदेव । तस्य जीवितान्ते ममाभिप्रायं युक्तं मन्वानो मृतप्रायः शयानो मयाकृतमेव समुचितमिति विदित्वा करुणापूर्णमेकं मम लेखमलिखत् । पिता चेत्पुत्रं क्षमां मार्गेत् मार्गतु । तथाप्ययं स्वपुत्रान्मत्संरक्षणीयान्कृत्वा यथा मे रोचेत तथा तान् शिक्षयितुमिच्छामीत्युक्त्वातिशीघ्रमेव मां द्रष्टुमिच्छामीत्यवदत् । दक्षिणाफ्रिकादेशमागन्तुमिच्छामीत्यलिखत् । आगम्यतामित्यहं प्रतिवचनमदाम् । तथाप्येतन्न हि संभवि स्यात् । तस्य पुत्रविषयिणीच्छापि पूर्तिं नागच्छत् । यतस्तेषां व्यवहाराः पुराणास्तेषां जीवनक्रमो विलक्षणश्च । तानहं मत्पार्श्वमाक्रष्टुं नाशकम् । नायं तदीयो दोषः । स्वकीयप्रकृतेरुद्गमं प्रति एतावदेव दूरं नातः परमिति को वा वक्तुं शक्नुयात् । जन्मन्यागतान्पूर्वसंस्कारान्विलोपितुं कः समर्थः । एकपुरुषस्य पुत्रा इतरे रक्षणीयाश्च तस्य पुरुषस्य मार्गानवश्यमवलंबंत इति को वा निरीक्षेत ॥

एतत्खलु प्रदर्शयति कियन्नियमपरतन्त्रं पितृस्थानमिति ॥

## षष्ठोऽध्यायः

# शाकीययज्ञः

**यथा** यथा यज्ञप्रसादः सरलता च मम प्रात्याहिकजीवने स्वानुभवमागता यथा च धार्मिकी बुद्धिरुत्तेजिताभूत् तथा तथा सर्वजनोपयोगी शाकाभिलाषो वर्धमान आसीत् । जानाम्यहमेकविधामेव केवलं ज्ञानोत्पादनरीतिं स्वयमेव वा ज्ञानान्वेषकैः सह वा ॥

जोहानिसबर्गप्रदेशे शाकाहारिणां भोजनालयः क्युनीमहाशयस्य जलचिकित्सायां बद्धश्रद्धेन केनचिज्जर्मनपुरुषेण संचाल्यते स्म । भोजनालयमहमेव गत्वा कैश्चिदाङ्ग्लमित्रैः सह साहाय्यमकार्षम् । किन्त्विदं मे विदितमासीद्यदयं सर्वदा द्रव्यसंकटे पतितश्चिरं न जीवेदिति । यावदहं तस्य साहायतां प्रतिपाद्य किंचिद्धनमपि तदर्थं व्ययीकृतवान् । किन्तु पर्यन्ते स विरतव्यापारः संजातः ॥

भागवताः 'थियोसोफिस्ट'मतानुयायिनः सर्वे प्रायः शाकाहारिणः । तत्संघीया महोत्साहशालिनी काचित् स्त्री शाकाहारिणां भोजनालयमस्थापयत् । तस्याः कलाप्रीतिरासीत् । सातिव्ययकारिणी आयव्ययनियमेषु मुग्धा । सा प्रारंभे स्वल्पेषणा स्थिता । पश्चात्प्रकोष्ठान्महतो गृहीत्वा बहुलीकर्तुमिच्छन्ती साहाय्यार्थं मामपृच्छत् । समीपमागताया आयव्ययविचारं न किंचिदहमज्ञासिषम् । तदीयगणना प्रायः समीचीना भवेदिति विभाव्य तस्याः साहाय्यं कर्तुमुद्युक्त इवासम् । मम व्यावहारिका मत्समीपे द्रव्यराशीन्निक्षिपन्ति स्म । तेषामेकस्य संमतिं लब्ध्वा एकसहस्रपौंडमितं द्रव्यं तदीयत्वेन प्रादाम् । सोऽयं मे व्यवहारो महोदारः श्रद्धालुश्च । दक्षिणाफ्रिकादेशं पुरा कर्मकरो भूत्वागतः । तेनोक्तं दीयतां धनम् । एतद्विषये न किंचिदहं जानामीति । जानाम्यहं भवन्तमेकमेव । तन्नाम 'बद्री'ति । पश्चादयं सत्याग्रहे मुख्य-भागमूढ्वा कलागारेष्यवसत् । अतोऽहमेकसहस्रदान एषा संमतिः पर्याप्तेति मत्वा प्रादाम् ॥

द्वित्रमासाभ्यन्तरे ज्ञातमासीद्दत्तं धनं पुनर्नागच्छतीति । एतावन्नष्टं सोढुमहं न शक्तः । एतद्धनं व्ययीकर्तुमासन्बहला उद्देशाः । उद्धारद्रव्यं नैव पुनरागतम् । कथं श्रद्धालुर्बद्रीमहाशयो नष्टं सहेत । मामेकमेव जानाति । अतस्तस्मा अहमेव दत्तवान् । एतद्व्यवहारमुद्दिश्य निवेदितः कश्चन सुहृन्मम मूर्खतामनिन्दत् । प्राह च—भ्रात (महात्मेति पितेति वा नाहं तदा दक्षिणाफ्रिकादेशे ख्यातः) एतन्न ते कर्तव्यम् । अनेकविषयेषु भवत्परतन्त्रा वयम् । धनं पुनर्नागमिष्यति । बद्रीमहाशयो न हि दुःखे पतिष्यति । तस्मै तस्य धनं त्वमेव दास्यसि । तव विश्रांतिसाधनाय व्यवहारिणां धनमेवं चेद्व्ययीक्रियेत तर्हि ते वराका नष्टा भवेयुः । त्वं च शीघ्रमेव याचको भविष्यसि । परन्तु त्वमितरपरतन्त्रो भिक्षुको यदि स्याः सार्वजनिककार्यमशेषं विरतिं यास्यति ॥

कृतज्ञोऽस्मि खल्वेवं ब्रुवाणः सुहृदद्यापि जीवति । दक्षिणाफ्रिकादेशे वान्यत्र क्वापि वा परिशुद्धिमत्तरो जनो नाद्यापि मया प्रत्यक्षीकृतः । यदि स लोकानां संशयपात्रं भवेत् स च संशयो निराधारो यदि स्यात्तदा क्षमां याचित्वात्मानं परिशोधयति । सम्यग्रीत्या मामबोधयदिति मया दृष्टम् । बद्रीमहाशयस्य नष्टं यद्यपि पर्यहार्षं तथापि समानधनविनाशे तथा कर्तुमशक्यत्वात् ऋणी अभविष्यम् । ऋणी त्वहं मम जीवितकाले कदापि नाभवम् । तत्र मे जुगुप्सा महती ॥

विश्रान्तिसाधनायापि मनुष्यः स्वावधिं नातिक्रामेत् । परकीयधनप्रदानं न गीतासु निरूपितम् । मुख्योद्देशोऽपि नानुरुद्धः । फलाभिसंधिं विना समभावेन कर्म कुर्यादित्युपदिश्यते । इयमसत्कृतिः सद्बोधज्योतिरासीन्मे ॥

एवं रीत्या शाकाहारप्रचाराय मया दत्ताहुतिस्तात्विकविद्यमानबलात्संभूता न पुनरुद्देश-पूर्वकमासीन्न च सा मयाभिलषिता ॥

सप्तमोऽध्यायः

# मृत्तिकाजलचिकित्साप्रयोगः

**निराडंबरजीवनेन** सह ममौषधेषु निःस्पृहा वृद्धिमागता । यदा हि मया डरबनपत्तने 'वकील'कार्यं क्रियते स्म तदा मे कंचित्कालं निःशक्तितो वायुप्रकोपनक्लेशितोऽभवम् । डॉ. मेहतामहाशयो मां द्रष्टुमागतः । चिकित्सतस्तेन नीरोगः संवृत्तः । ततःपश्चाद्यावद्भारतभूमिं गतस्तावन्न किंचिदस्वास्थ्यं नाम मया सोढमासीत् । किन्तु जोहानिसबर्गप्रदेशे मलबन्धेन पदे पदे शिरःशूलेन च वेदनां गतः । अवसरेऽवसरे प्रवृत्त्यौषधग्रहणेन समयोचिताहारसेवनेन प्रकृतिस्थोऽहं स्थितः । किंत्वनामयोऽस्मीति वक्तुं न शक्तः । एषां प्रवृत्त्यौषधानां योगेन कदा विमुक्तो भवेयमित्याश्चर्यभरितोऽस्मि ॥

अस्मिन्नेव काले प्रायः मांचेस्टरपत्तने प्रातराहाराभावसंघस्थापनासमाचारपठितम् । तस्य संचालकानामाशयो यथा — आङ्ग्लजनो वहुकृत्वोऽतिमात्रं चाभुंक्त । तदीय 'डॉक्टर'महाशयानां व्ययनिरूपकपत्राणि गुरुण्यासन् । यतोऽर्धरात्रपर्यन्तमभुञ्जत । आधुनिकपरिस्थितिं समीकर्तुं प्रातराहारो वर्जनीय इति । एतावत्सर्वं यद्यपि ममान्वयं नागात्तथापि कचिद्भागे ममाप्यन्वयमभजत् । यतो मे त्रिवारं भोजनं पुनर्मध्याह्ने 'चा'पानादिकं च । खादनेऽहं न मन्दः । सूपमाहाराना-कण्ठपूरं दलवर्जं भुज्यते स्म । षट्सतवादनात्पूर्वं नाहं शयनादुदतिष्ठम् । ततः प्रातराशं यदि त्यजेयं शिरःशूलान्मुक्तो भवेयमिति । कतिपयदिवसमयं तं दुष्करतया प्रयत्नमकार्षम् । शिरःशूलानि सर्वाण्यपि विलयं गतानि । तदेव निदर्शनमासीद्यदहं यावदावश्यकं तदतिक्रम्य भुञ्जान आसमिति ॥

एतत्परिवर्तनेनापि मलबंधक्लेशादहं न मुक्तः । क्युनीमहाशयस्य कटिस्नानमकार्षम् । तेन किंचित्स्वास्थ्यमासीत् । संपूर्णपरिहारो नाभूत् । एतदन्तरे शाकाहारिभोजनालयस्य गोप्ता जर्मनमहाशयो वा सुहृद्तरं वा विस्मरामि 'जुस्ट'कर्तृकं 'प्रकृतिं प्रति निवृत्तिः' इति ग्रन्थमेकं मम हस्ते प्रादात् । अस्मिन्पुस्तके मृत्तिकाचिकित्सा निरूपिता । यया चिकित्सया कलितमाश्चर्यम् । चिकित्साविधानमित्थं — जठरस्योपरि शुद्धमृत्तिका शीतलोदकेन मिलिता समीचीनकपटे प्रसारिता भवतु । अहं शयनात्पूर्वं निधाय रात्रौ वाथवा प्रातर्वा यदा जाग्रद्भूवं तदा निष्कास्यते स्म । एतेन रोगो निर्मूलितः । स्वस्योपरि मित्राणामुपरि चेदं परीक्षितम् । न किमपि विषीदितुं कारणं दृष्टम् । हिन्दुस्थाने श्रद्धयेमां चिकित्सां विधातुं न शक्नोमि । यत एकस्मिन्स्थानेऽवस्थाय परीक्षा न शक्या । किन्तु मृत्तिकाचिकित्सायां मे श्रद्धा वर्तते । अद्यापि मृत्तिकाचिकित्सामात्मोपरि करिष्यामि । सहकारिणां सत्यवसरे च तत्प्राशस्त्यं ब्रवीमि ॥

यद्यपि द्विवारमहं रोगाक्रान्तस्तथापि स्वल्पैवावश्यकतासीदौषधं सेवितुम् । 'सहस्र-एकोनसहस्रं सम्यगाहारसेवनेन मृत्तिकोदकचिकित्सया तथाविधगृहस्थितवस्तूपभोगेन च सुख-

संरक्षितं भवति । यस्तु यस्तु स्वल्पास्वास्थ्यकृते 'डॉक्टर-वैद्यो हकीम' इति परिधावति नैकविधशाकं औषधान्तरं च भुङ्क्ते स निजजीवितकालं ह्रस्वीकरोति देहस्योपरि स्वामिभावं दूरीकृत्य दासभावमङ्गीकृत्यात्मनिग्रहं त्यक्त्वा पुरुष एव न भवति ॥

एतान्विषयान्न कोऽप्यन्यथा मन्यतां शयनस्थरोगिणालिखिता इति । मम रोगिणां कारणमहं जानामि । अहमेक एवात्र हेतुभूत इति जानामि । तादृशज्ञानादेव सह्यते मया । वस्तुतो भगवत्यहं कृतज्ञः । तानि खलु शिक्षणानि मे । नैकविधान्यौषधानि सेवितुं प्रेरणामपहृत्य स्थितः । मदीया हठवृत्तिरसकृत् डॉक्टरमहाशयं स्वेदयतीति जानाम्यहम् । किन्त्वेते तां कृपया सहमाना मां न त्यजन्ति ॥

परन्तु इदानींतनस्थितेः सविस्तरं वर्णनमनावश्यकम् । अतः खिस्ताब्दस्य विंशतिशतकस्य चतुर्थं पञ्चमं वा वर्षं पश्यामः । पुरस्ताद्गन्तुमन्तरा पाठकस्य बोधनमेकं प्रदेयम् । एतदध्यायबलाद्धे जुस्टमहाशयस्य पुस्तकं क्रेतुमिच्छन्ति तैस्तद्गतं सर्वं वेदोक्तिरिति न मन्तव्यम् । लेखकः सर्वदैकमुखं प्रदर्शयति । सप्तविधानि प्रदर्शनानि भवेयुः । प्रत्येकं सर्वमपि समीचीनम् । किन्त्वेकस्मिन्काले विषये च समीचीनो न भवेत् । अथानेकानि पुस्तकानि ग्राहकांल्लब्धुं कीर्तिं च संपादयितुं लिख्यन्ते । तत ईदृशानां पुस्तकानां पाठका विवेकमयदृष्ट्या पश्यन्तु । अनुभवशालिनः कस्यापि बुद्धिवादं गृहीत्वा ततः प्रतिपादितविषयान् बुध्वाथवा स्वयं पुस्तकानि सहनेन पठित्वा जीर्णीकृत्य पश्चाद्यथावत्कार्यं विधेयात् ॥

## अष्टमोऽध्यायः

# प्रबोधः

**अग्रिमाध्यायं** यावद्विषयान्तरप्रस्तावः कार्य एवेति मन्ये । मृत्तिकाचिकित्साविषयकपरीक्षणैः सहाहारविषयाण्यपि क्रियन्ते स्म । द्वितीयमेतत्प्रकृत्य कतिचित्कथनीयांशाः सन्ति । पश्चादपि तमेव विषयमुद्दिश्योच्यते ॥

आहारपरीक्षणविषयमद्य वा पश्चाद्वा विस्तरेण न कथयामि । यतो गुर्जरभाषामयानां निबंधानां वस्तुतो बहुवत्सरेभ्यः पूर्वमेव 'इंडियन ओपिनियन' पत्रिकायामदृश्यन्त । त एव पश्चात्पुस्तकरूपेण 'गाइड आफ हेल्थ' अथवा 'आरोग्यमार्गदर्शिनी'त्युक्ताः । जगतः पूर्वपश्चिमभागयोर्मम लघुग्रन्थानां मध्येऽयमेव बहुविशिष्टतया जनैः पठ्यते । न खलु कारणं शक्नोमीह विज्ञातुम् । 'इंडियन ओपिनियन' पत्रिकावाचकानामुपयोगायानया पुस्तिकया जगतः पूर्वे पश्चिमेऽप्यदृष्टः 'इंडियन ओपिनियन' जनानामपि मनसि बहुतरां परिष्कृतिमजीजनत । यतो

विषयमुद्दिश्य पत्रव्यवहारं मया सह ते कुर्वन्ति । लघुपुस्तिकां प्रति किंचिद्वक्तव्यमापतितम् । यतो विषयपरिवर्तने यद्यपि कारणं नास्ति तथापि ममाचारपरिवर्तनमस्तीति सर्वे पाठका न जानन्ति । ततस्ते तन्निवेदयितुमर्हा इति मन्यामहे ॥

मम सर्वाणि लेखनान्तराणीव धार्मिकप्रत्ययं मनसि कृत्येयमपि पुस्तिका लिखिताभूत । प्रत्येकमपि मदीयं कर्म तादृशप्रत्ययस्फुरितमेव वर्तते । अत एव मे परमो विषादो यद्ग्रन्थगतानि समाख्यानान्यनुरोद्धुमहं न शक्त इति ॥

मानवाहारेषु दुग्धं नैवावश्यकं शैशवे यत् स्तन्यरूपेण गृह्यते तदन्तरेण तस्याहारस्तु केवलमातपतप्तफलानि शलाटवश्च । द्राक्षासदृशैः फलैर्बदामस्शलाटुमिश्च त्वचां नाराप्यां च पर्याप्ता पुष्टिः लभ्येत । स्त्रीव्यामोहस्येतरकामानां च निग्रहस्तादृशाहारभोजिनः सुलभो भवति । मदीयसहकारिभिर्मया चानुभवादृष्टं या हिन्दुलोकोक्तिर्यथा भुङ्क्ते तथा भवतीति सा सत्यभूता । एते आशयाः पुस्तके विस्तरेण निरूपिता भवन्ति । किन्तु भारते इदमेव दौर्भाग्यं यदाचर्यमाणेषु व्यवहारेषु कतिपये मयैवोक्ता न पारमार्थिका भवन्तीति वलाद्वक्तुमुचितम् । 'खेडा'प्रदेशे जनसंग्रहकार्यप्रयुक्तोऽहं यदा तदाहारे कृतमेकं स्खलितं मां नीचैरपातयत् । मां मृत्युद्वारमनयत् । दुग्धं विना भग्नशरीरं पुनर्निर्मातुं यो यत्नः कृतः स व्यर्थोऽभवत् । अहं 'डॉक्टर'महाशयानां वैद्यानां वैज्ञानिकानां च साहाय्यममार्गं दुग्धस्थाने किंचिदन्यदुच्यतामिति । कतिचिन्मुंगजलं सूचयामासुः । पुनः कतिपये मौरातैलम् । केचिद्बादां दुग्धम् । अहमेतैः परीक्ष्यमाणोऽपि रोगिशयनं विमोक्तुं मे न किंचित्साहाय्यमकरोत् । वैद्याश्चरकग्रन्थं प्रमाणीकृत्य धार्मिकबुद्धिविकल्पानामाहारविषयस्यापि न कोऽपि संबंध इति श्लोकान्पेठुः । एतेन दुग्धं विना जीवितुं साहाय्यकरणे ते नहि शक्ताः । कथमन्ये वृषभमांसस्य'चा' सुरां च विकल्पं विना ग्राह्यतया प्राशंसन्ते दुग्धशून्यमाहारं गृहीत्वा वर्तने मम साह्यं कुर्युः ॥

कृतेनैकेन शपथेन बद्धोऽहं गोर्वा महिष्या वा दुग्धसेवने प्रतिषिद्धः । एतद्व्रतं तावत्सर्वदुग्धानां परित्यागाय । किन्तु व्रतग्रहणकाले मनसि गौरिति महिषीति द्वयमेव कृतमासीत् । जीवितुमिच्छावानहं व्रतस्याक्षरशो दृढीकरणाय कथमप्यात्मानं वंचयित्वाजादुग्धं ग्रहीतव्यमिति निश्चितवान् । अजादुग्धसेवनकाले नितरामहं जागरूक आसम् । बत हृदयभङ्गोऽभवदिति जानन् ॥

'रॉलेट-अेक्ट'प्रतिकूलवर्तनं मनसि निरूढमासीत् । तेन जीवितुमभिलाषोऽवर्धत । अत एव मम जीविते महत्परीक्षणमेकं विरतिमागतम् ॥

जानाम्यहं मनुष्यः खादति पिबति च । किन्तु तस्यात्मा तु न खादति न च पिबति वा । वाह्यतो यदन्तर्निक्षिपसि तन्न किञ्चित् । अन्तर्भागतो वहिः प्रकाश्यते तन्मुख्यम् । किन्तु तस्य

परीक्षणं विहाय एतावताहं संतुष्यामि यावता दृढं ब्रूमो यद्भगवद्गीतान्वेषकस्य साक्षादेनं पश्यत आहारे नियमः प्रमाणे गुणे चालोचनाभाषणयोरिव मुख्यः ॥

यत्र मदुक्तिरेव स्खलिता वर्तते तत्र विषयो नैव निवेदनीयः । किन्तु तदनुरोधो न कर्तव्य इति विशिष्य सद्बोधनं कर्तव्यम् । मदीयोक्तिबलात् यैर्दुग्धपानं परित्यक्तं तैस्तत्परीक्षणं न कर्तव्यं यद्युपयोगो दृश्यते अथवानुभवशालिनां वैद्यानां बुद्धिवादस्तथाविधः स्यात् । एतावत्पर्यन्तं ममानुभवे येषां दुर्बलो जीर्णकोशो ये च शयनपतितास्तेषां दुग्धसदृशो लघुः पुष्टिकरश्चाहारो न विद्यते ॥

यदि कश्चिदेनमध्यायं पठित्वा स्वानुभवेन न तु पठनेन शाकाहारवत्पुष्टिकरं जीर्णकारि च दुग्धस्थाने प्रतिनिधिं मे ब्रूयात्तदाहं तस्य बहूपकृतः स्यामिति ॥

## नवमोऽध्यायः

# अधिकारिभिः कलहः

**अथैशियासंस्थोपरि** दृष्टिं निक्षिपामः ॥

जोहानिसबर्गपत्तनमेशियाधिकारिणां बलीयः स्थानमासीत् । एत अधिकारिणः भारतीयचीन-देशीयादीनन्यांश्च नैवारक्षन्किन्तु पिंषन्ति स्म । प्रतिदिनं मत्पार्श्वमायान्ति स्म विषण्णानां वचनानि एतादृंशि । येषामस्त्यधिकारस्तेन प्रवेश्यन्ते । येषां तावन्नास्ति तेभ्य एकशत-'पौंड'-स्वीकृत्य रहसि प्रवेक्ष्यन्ते। यदि भवान् कष्टमीदृक् न विचारयेदन्यः को नः करोतीति। अहमपि तन्मना अभवम्। यद्यहमेतदनिष्टं न विनाशयेयं तर्हि ट्रान्सवालदेशे मम वर्तनं व्यर्थमेव स्यात् ॥

ततोऽहं साक्ष्यं संग्रहीतुमुपक्रम्य लब्धेऽस्मिन् पर्याप्तप्राये 'पोलीसकमिशनर' अधि-कारिणं द्रष्टुमगाम्। असौ पारमार्थिकः पुरुष इवादृश्यत । औदासिन्यं दूरीकृत्य सर्वमशृणोत् । भवतः साक्ष्यसंग्रहं प्रदर्शयेति पृष्टः यावदासीन्मत्समीपे तावद्दत्तवान्। साक्षिणः स्वयमेव परीक्ष्य तृप्त आसीत् । किन्तु दक्षिणाफ्रिकादेशे सवर्णजनानामुपर्यानीताभियोगेषु गौरांगापराधिने गौरां-गपंचायितस्य पुरस्तात् दंडयितुं दुष्करमिति यथा मया तथा तेनापि ज्ञातम् । नैतद्युक्तं प्रतिभाति यत्पंचायितजनास्तान्विमोचयिष्यन्तीति भियापराधिनो मोचयितुम् । तान्ग्राहयितुं प्रयतिष्य एव ॥

तादृशी दृढोक्तिर्नावश्यक्यासीत् । बहूनामधिकारिणामुपरि संशयो ममासीत् । किन्तु तेषां सर्वेषामुपरि प्रामाणिकं साक्ष्यं नासीत् । अतो ययोरपराधं प्रति न मे संशयलेशोऽप्या-सीत्तयोर्द्वयोरेव ग्रहणाय ग्रहणाज्ञापत्राणि प्रेषितानि ॥

ममेतस्ततः परिक्रमो रहोऽज्ञातवन्निक्षेप्तुं न शक्य आसीत्। बहवोऽज्ञासिषुर्यत्प्रत्यहं 'पोलीसकमिशनर'स्य पार्श्वं गच्छामीति। गृहीतौ द्वावधिकारिणौ गूढान्वेषकौ समर्थप्रायावास्ताम्। इमे मदीयकार्यालयं संचर्य स्वाधिकारिणां मम चलनानि निवेदयतः। एतावधिकारिणौ तथा दुष्टावास्तां यथानयोर्गूढान्वेषका बहवो न मिलन्ति स्म। यदि भारतीयचीनदेशीयजना मम साहाय्यं नाकरिष्यन् तदा तयोरासेधो न शक्योऽभविष्यत्। अनयोरेकः पलायितः। देशांतराद्गृहीत्वानयनाय ग्रहणाज्ञां दत्वा ट्रान्सवालप्रदेशं प्रापितः। न्यायस्थाने विचारणायां स्वप्रतिकूलसाक्ष्यं यद्यपि बहुलमासीदपि च यद्यपि पंचायितजनः पलायितस्यैकस्य साक्ष्यं प्राप्तवान् तथाप्युभावपि निर्दोषिणाविति विमुक्तावभूताम्॥

अहं तावन्निराशः संवृत्तः। 'पोलीसकमिशनर' अपि विषण्णोऽभूत्। न्यायस्थानकार्येषु जुगुप्सा समजनि। बुद्धिरेव विषादकरी यदेषापराधं निगूहितुं साधनं जाता॥

अनयोरुभयोरधिकारिणोरपराधः सार्वजनीन आसीत्। यद्यपि न्यायस्थाने विमोचितौ तथापि 'गवर्नमेंट' एवैतयोराश्रयं न ददौ। उभावप्युद्योगान्निवर्तितौ। 'एशियाटिक' संस्था च परिशुद्धप्राया भूत्वा भारतीयसमाजो मनसि दृढीकृत आसीत्॥

एतत्कार्यं मम गौरवमवर्धयत्। न्यायस्थानकार्याणि बहून्यभवन्। प्रतिमासं व्ययीक्रियमाणं शतानि। 'पौंड'द्रव्यस्य रक्षितान्यासन्। आत्मनश्चौर्यात्। सर्वं न रक्षितुं साध्यमासीत्। यतोऽसत्यवर्तिनः स्वव्यापारमद्यापि कुर्वन्ति स्म। किन्तु सत्यवर्तिनो जनस्य सत्यं रक्षितुं शक्यमासीत्॥

इदं तावद्वक्तव्यं यदेतावधिकारिणौ दुष्टावपि तयोरुपरि मे न किंचिदासीत् स्वतः। इदं तयोरपि विदितमासीत्। संकटपतितौ मत्समीपमागतौ च। अहं च साह्यमकरवम्। जोहानिसबर्ग 'म्युनिसिपालिटि'संस्थायामुद्योगं लब्धुमवकाशोऽविद्यत। यद्यहं तयोर्न प्रतिकूलः। अस्मिन्संदर्भे तयोः सुहृदेको मां द्रष्टुमागतः। नाहं प्रतिकूलो भविष्यामीत्यवोचम्। तौ विजयं प्रापतुः॥

येषामुद्योगिनां संपर्को मे जातस्तैः सह मदीयवृत्तिः सुखकरी बभूव। अपि च यद्यपि वारं वारं तत्संस्थाविषये परुषोक्तिप्रयोगं कृत्वा कलहायितुमुद्युक्तस्तथापि मया सह सौहार्देनावर्तन्त। सोऽहं मम स्वाभाविकोंऽश इति तदा मे न ज्ञातम्। स्वयं सत्याग्रहस्यावश्यको भागः। अहिंसायाश्च स्वरूपमिति पश्चादवेदिषम्॥

पुरुषस्तत्कृत्यं च भिन्नवस्तुनी। सत्कार्यं संमतिमसत्कार्यमवमतिं च भजति। कार्यकर्ता तु साधुर्वा दुष्टो वा सर्वदा मर्यादां कारुण्यं वा यथार्हतः प्राप्नोति। पापे द्वेषो न पुनः पापकारिणि। इयं लोकोक्तिः सुलभा विज्ञातुम्। तदभ्यासस्तु विरलः। अत एव द्वेषरूपं विषं प्रपंचे प्रसरति॥

इयमहिंसा सत्यान्वेषणस्याधारः। इदानीमहं प्रतिदिनं जानामि सत्यान्वेषणं व्यर्थमहिंसाधारं विना। जगदभियोक्तुं प्रतिविधातुं च युक्ततरमेव कर्ता चेत्करोति तदात्मानमेव प्रतिविधत्तेऽभियुङ्क्ते च ॥

एकस्यापराध इवान्यस्यापि वर्तते। वयं सर्वेऽपि एकस्यैव स्रष्टुरपत्यानि। दिव्यशक्तयोऽस्मदन्तरनन्ताः। मानवप्राणिन एकस्यापि तिरस्कारस्तासां शक्तीनामेव तिरस्कारः। न केवलं प्रहतं तं प्राणिनं किन्तु सर्वामपि जगतीम् ॥

## दशमोऽध्यायः

# पवित्रस्मृतिः प्रायश्चित्तं च

**मम** जीवितेऽनेकविधा व्यवहारा बहलमतस्थानां बहलसमाजानां च पुरुषैः समीपसंपर्कमकार्षीत्। तेषां परिचयेन दृढं वक्तुमिदं शक्यं यद्बंधूनां दूरस्थानां च मध्ये देशीयानां विदेशीयानां च गौरांगानां सवर्णानां च हिन्दुनां भारतीयजनानामितरमतस्थानां च 'मुसलमानपारसीक्रिश्चियन' अथवा 'ज्यू'जनोऽस्त्वेतेषां मध्ये च न भेदं पश्यामि। तादृशभेदप्रत्ययो मे मनसि न जायते। अयमेको गुणविशेष इत्यपि न वक्तुं युज्यते। तदेतन्मम स्वभावे निरूढं न पुनर्मम प्रयत्नकृतं फलम्। परंत्वहिंसाब्रह्मचर्यापरिग्रहेषु तेषामभ्यासं कर्तुं प्रयतमानोऽस्मीति संपूर्णज्ञानं मे वर्तते ॥

डरबनपत्तने न्यायस्थानकार्याणि यदाहमकार्षं तदा मम कार्यालयस्य लेखका मया सह बहुशः स्थिताः। तेषां मध्ये 'हिंदुक्रिश्चियन'जनाश्चाथवा देशतो वर्णने गुजरातीयास्तामिलजनाश्चैतानहंबन्धुमित्राणीव गणयन्नासमन्यथा तान्न जानामि। ते सर्वे मम कुटुंबस्य जन इति सर्वदा मे गणना। भार्या मे मार्गे निरुध्य स्थिता चेन्न समीचीनमासीत्। लेखकानामेकः 'क्रिश्चियना'सीत्। स च पंचमदंपत्योः पुत्रः ॥

गृहं पाश्चात्यरीत्या निर्मितमासीत्। प्रकोष्ठेभ्योऽशुद्धजलं निष्कासयितुं नाभूदवकाशः। प्रतिप्रकोष्ठं मूत्रपात्राण्यासन्। भृत्यादिभिः कार्यकरणापेक्षया भार्या वाहं वा स्वयमकार्ष्व। स्वमन्दिर इव चरन्तो लेखका स्वपात्राण्यशोधयन्। किन्तु 'क्रिश्चियन' लेखको नूतनमागतः। तस्मै शयनागारमालोकितुमस्मत्कर्तव्यमासीत्। भार्यान्येषां पात्राणि निरवाहयत्। पंचमस्य पात्राणि स्वच्छीकर्तुं तस्याः सहनशक्तिमतिक्रान्तमासीत्। अतो ह्यावयोः कलहः प्राप्तः। मां पात्राणि शोधयन्तं दृष्ट्वा सहितुं न शक्ता भार्या स्वयं वा कर्तुं नारोचयत्। स्मरामि किलाद्यापि यथा मां निन्दन्ती क्रोधेन रक्तनयना कपोलयोरुपरि जलबिन्दून्पातयन्ती पात्रहस्ता निःश्रेणिकामवरोहन्ती दृश्यते स्मेति। परंत्वहं क्रूरतया मृदुः पतिर्मया सा शिक्षणीयेति मत्वान्धप्रेम्णा तामक्लेशयम् ॥

केवलं पात्रमवहदिति न मे तृप्तिरासीत् । प्रीत्या कार्यं करणीयमिति मे मतिः । अतोऽहमवोचमुच्चैः शब्दं कृत्वा मम गृहे एतादृशीं मन्दबुद्धितां नाहं सहिष्य इति ॥

वाक्यमिदं तां बाणवदविध्यत् । सा पुनरक्रंदत् । तव गृहं तवैव स्थापयाहं गच्छेयमिति । अहमात्मानं व्यस्मरम् । प्रेमरसः शुष्कोऽभूत् । हस्ते तां वराकीं गृहीत्वा निःश्रेणिकासमीपवर्ति बहिर्द्वारमुद्घाटयितुमिच्छन् तां च बहिर्निष्कासयितुमाकृष्य पुरो गतः । नेत्रांशुप्रवाहस्तस्याः कपोलयोरुपरिष्टाद्धावति स्म । अपि च सा चक्रंद यथापि ते लज्जालेशोऽपि न विद्यते । तवात्मा तावद्दूरः किं विस्मरणीयः । भगवानहो वर्तताम् । बहिर्द्वारस्य बंधनं कुरु । मा तावदितरेऽस्मच्चेष्टितानि जानीयुरिति ॥

अहं धीरमुखः स्थितः । परन्तु लज्जित एव भूत्वा द्वारबंधनमकार्षम् । भार्या मां यदि त्यक्तुं न शक्ता तर्ह्यहं च न त्यजेयम् । आवयोर्मध्ये दुश्चेष्टाः सन्ति निःसंख्याः परन्तु पर्यन्ते शान्तिरावयोः स्थिता । भार्या तावदद्वितीयसहनशक्तिः सर्वदा जयशालिनी भवति ॥

अद्याहमसक्त एव प्रस्तुतमभिधातुं शक्नोमि । कालोऽयमन्यः । अस्माद्बहिरागतोऽहं स्थितः । नाहमद्याप्यन्धो मत्तः पतिः । नाहमत्र भार्याया अपि शिक्षकः । 'कस्तूरबा' यदि सा तथा इच्छेत्तर्हि मय्यसम्यग्वर्तिनी स्याद्यथा तस्यामहं पूर्वमासम् । आवां परीक्षितौ सुहृदौ परस्परकामोपभोगायेति न मन्यामहे । रोगाक्रांतिकालेषु प्रतिफलमनपेक्ष्य मत्पोषिकाभवत् ॥

प्रस्तुतो विषयोऽष्टनवत्युत्तराष्टादशसहस्राधिकमिते (१८९८) वत्सरे समभवत् । तदा हि मे ब्रह्मचर्यप्रत्ययो नासीत् । तदा हि ममालोचनायां भार्यापत्युः कामभाजनमित्यासीत् । पत्युराज्ञाकारिणी न पुनस्तस्य साहाय्यकारिणी सखीव तस्य हर्षदुःखेषु भागिनीति स्थितम् ।

एकोनविंशे सहस्रमिते वर्षे इमा भावनाः परिवर्तनं जग्मुः । षडुत्तरैकोनसहस्रमितवर्षे (१९०६) ता राशिरूपं भेजुः । किन्तु तद्विषये तस्योचितस्थाने वक्ष्यामि । एतावदुक्तं पर्याप्तं यत्कामावेशः क्रमशोऽदर्शनमगात् । तावन्मम गृहस्थजीवनं शान्तं मधुरं सुखकरं च दिने दिनेऽधिकाधिकं भवति ॥

पवित्रस्मृतेः कथया न कोऽप्येवं निश्चिनुयाद्यथावां प्रामाणिकदंपती स्मः । अथवावयोर्मध्ये विषयाणां संपूर्णः समभावोऽस्तीति । 'कस्तूरबा' एव प्रायशो जानाति मत्तो भिन्ना विषयाः स्वस्य सन्ति वा न वेति । अद्यापि मया क्रियमाणानां संमतिर्नास्तीति प्रायो दृश्यते । आवां तद्विषये चर्चां न कुर्मः । चर्चायां च न विद्यते शुभम् । न पितृभ्यां न च मया सा युक्तवेलायां विद्याभ्यासं कारिता । किन्तु महानेको गुणोऽस्याः हिन्दुभार्याजनस्यापि किंचिद्वर्तते बहुधा त्वस्याः । तदेतद्यथा मनःपूर्वकं वा न वा जानती वा न वा प्रयतमाननियममार्गे न कदापि प्रतिकूलं स्थिता । मम पादक्रमानेवानुसरन्ती च स्थिता । यद्यप्यावयोर्बुद्धिविशेषे महान्व्यत्यासो भवेत्तथापि सर्वदेयं मे भावना यदावयोर्जीवने मनस्तृप्तिः सुखमभ्युदयश्च विद्यन्त इति ॥

एकादशोऽध्यायः

# 'ऐरोप्यैः' सह गाढः परिचयः

**अनेनाध्यायेनानीतोऽस्मि** येनेदं वाचकाय वक्तुमावश्यकं भवति यथेयं कथा सप्ताहात्सप्ताहं लिख्यते ॥

यदाहं तां लेखितुमारब्धवान् तदा लेखनमार्गो न निश्चितः। दैनंदिनपुस्तकलेखनं पुस्तकं वेतरपत्राणि वात्मकथलेखनस्याधारो न निक्षिप्तः। लेखनकाले यथा भगवान् प्रेरयेत्तथा लिखामि। ममात्मचिंतनानि कार्याणि च भगवता प्रेरिता भवन्तीति मन्ये। परन्तु मम जीवनकाले मया बहुधा कृतेषु परीक्ष्यमाणेषु तथा स्वल्पास्वपि क्रियासु परीक्ष्यमाणासु सर्वाण्यपि भगवतैव प्रेरितानीति वक्तुं नानुचितं भवेत् ॥

मयासौ न प्रत्यक्षीकृतः न चाहं तं जानामि। या भगवति जगतो भक्तिः सैव मया स्वकीया कृता। सा चावरोपयितुं न शक्येत्यस्मान्मयानुभवोऽयमिति मन्ये। मम भक्तिरेवानुभव इति वचनं सत्यमनर्थं करोतीति चेद् भगवति भक्तिं निरूपयितुं शब्द एव नास्तीति वक्तव्यम् ॥

ज्ञातुमिदानीं सुलभं यथा भगवत्प्रेरणयैव कथां लेखिष्यामीति। यदाहं गताध्यायमलेखिषं तदास्याध्यायस्य शिरोवर्णनमेवं प्रादाम्। किन्तु लेखनं सर्वतो ममास्फुरद्यथा 'युरोपीय'जनैः सह ममानुभवस्तस्य पीठिकां किंचिल्लेखितुमुचितमिति। अत एव तस्य परिवर्तनेन शिरोवचनमन्यथाकृतम् ॥

एतमध्यायमारभमाणस्य नव्यो विषयोऽवस्थितः। आंग्लसुहृदां विषयकलेखने किं वक्तव्यं किं मोक्तव्यमितीव चिन्तनीयम्। संबद्धा विषया यदि परित्यज्यन्ते तर्हि सत्यं मन्दीभवति। अस्याः कथाया लेखने संबद्धतां प्रति यदा मे न दृढः प्रत्ययस्तदा संबद्धतायाः प्रस्तुतत्वेऽपि निश्चेतुं दुष्करम् ॥

चिरात्पूर्वं मया यत्पठितमात्मकथायाश्चरित्रादप्यपर्याप्तता तदिदानीं स्पष्टं विजानामि। यावदहं स्मरामि तत्सर्वमस्यां कथायां न लिखामि। सत्यं चिंतयता मया कियत्प्रदेयं कियत्त्यक्तव्यमिति वक्तुं शक्यम्। मम जीवने परोक्षसंवृत्तानां कतिचिद्विषयाणामपर्याप्तसाक्षित्वस्य न्यायस्थाने किं मूल्यं स्यात्। लिखितपूर्वानध्यायानधिकृत्य परकीयकृत्यविचारकः कोऽपि यदि मां परीक्षेत तदा बहुलमज्ञातपूर्वं प्रकाशमायाति ॥

यदि मे विरोधी कश्चित् शिल्पावलोकी परीक्षेत तदा मम सत्यप्रधानां गाथतां प्रकाश्यात्मनः स्तुतिपात्रतां प्रदर्शयेत् ॥

अतोऽहमाश्चर्यचकितश्चिन्तयामि। एषामध्यायानां लेखनमेव कुतो न त्यजेदिति।

किंवाभ्यन्तरनादेन निषेधो यावन्न स्यात् तावल्लेखनं चलतु। यावन्न स्यान्नीतिविरुद्धा तावन्न परित्यजेदिति कल्याणी लोकोक्तिरनुसरणीया ॥

परकीयकृत्यशिल्पिनः संतोषयितुमहमात्मकथां न लिखामि। तल्लेखनमेव सत्येनानुभवः। मम सहकारिणां किंचिदानुकूल्यं स्मरणायाहारं च प्रदातुं निश्चितमेवोद्देशानामेकः। तेषामभिलाषानुसारेणैवाहं लेखकः प्रवृत्तः। जेरामदास–स्वामीआनंदश्च यदि सूचनां न ददतुस्तर्हीयं नैव लिखिताभविष्यत्। आत्मकथालेखने ताभ्यां दोषभागिभ्यां भवितव्यम् ॥

परन्तु शिरोवचनानुसरं विषयं ग्रहीष्यामः। मम कुटुंबस्य जन इव यथा भारतीयजनो मया सह न्यवसत्तथांग्लसुहृदोऽपि। मया सह निवसद्भ्योऽखिलेभ्यो नेदमरोचत। परंत्वेतान्निक्षेप्तुं निर्बन्ध आसीत्। नाहं प्रतिविषयं बुद्धिमानासम्। आसन्मे विषया अनुभवाः। परंत्वेते भारतीयाः 'युरोपियन' चोभये। अननुभवानां नाहं विषीदामि। यद्यप्येवं स्थितेषु यद्यप्यनानुकूल्यं क्लेशश्चोत्पादितः सुहृद्भ्यो मच्चरितमहं नान्यथाकृतवानपि च सुहृदः सोढवन्तो मया। आगन्तुकानां संपर्को यदि दुःखकरस्ततस्तान्दूषयितुं नैव संशय आसीत्। अन्ये यथा स्वेषु स्वेषु भगवन्तं पश्यन्तोऽन्येष्वपि तथा पश्यन्तः सर्वेषां मध्ये प्रत्येकं निवस्तुमर्हन्ति। अपि चैव निवस्तुं या शक्तिः साभ्यासनीया। न हि संपर्कनिवारणेनापि तु सेवाधर्मेण स्वयं तैरपरिहारिताः ॥

'बोअर'युद्धं यदाभवत् तदा मम गृहं संपूर्णमासीत्। जोहानिसबर्गप्रदेशादागतौ द्वावांग्लौ प्राप्तौ। उभये च भागवतौ ( Theosophists ) तयोरेकः किचन्महाशयः। तं पुरस्ताद्विज्ञातुमवसरो वर्तते। एतौ सुहृदौ मम भार्याया नयनांबुजनकौ। दूरदृष्टवशान्मत्कारणादनेकसंकटान्यन्वभूताम्। अयमेव प्रथमोऽवसर आंग्लसुहृदः कुटुंबजन इवावसन्। यदाहं 'इंग्लैंडदेशे' न्यवसं तदा तेषु दिवसेषु आंग्लगृहेष्वासम्। परन्तु तत्र तज्जीवनमार्गानन्वसरम्। क्वचिद्भोजनालयवास इवासीत्। अत्र तु तदन्यथाभूत्। आंग्लसुहृदः कुटुंबवर्ती जन आसन्। अनेकविधासु तौ भारतीयरीतिमाश्रितौ बहुषु विषयेषु। गृहस्य बहिः सूचना पाश्चात्यरीत्यैव। आंतरजीवनं तु प्रायः सर्वं भारतीयपद्धत्या। कुटुंबजनमिव तौ निधातुं किंचित्कष्टमासीत्। परन्तु गृहस्यान्तरे सुखेन तौ निवेशयितुं नैव किंचिदपि क्लेश आसीत्। जोहानिसबर्गप्रदेशएते परिचया डरबनपत्तने भूयांस आसन् ॥

द्वादशोऽध्यायः

# 'युरोप'जनेन संपर्कः

**एकदा** जोहानिसबर्गपत्तने चत्वार भारतीयलेखका मत्पार्श्वे स्थिताः। न ते लेखकाः किन्तु मदीयपुत्रा एव। परन्त्वेते मत्कार्याय न पर्याप्ता आसन्। 'टाईपरायटिंग' विना कार्यं न चलति स्म। एतन्मध्ये तद्वेद्म्यहमेक एव। द्वौ लेखकावहं तदशिक्षयम्। परन्तु तावांग्लभाषानभिज्ञतया पर्याप्तशक्तियुक्तौ नाभूताम्। एतेष्वेकमायव्ययज्ञं कर्तुमैच्छम्। नातालप्रदेशान्न कोऽपि मिलति स्म। अनुज्ञापकपत्रं विना ट्रान्सवालप्रदेशं न कोऽपि प्रवेष्टुमर्ह आसीत्। मम स्वतानुकूल्यायानुज्ञाप्रदमधिकारिणं तदनुग्रहाय प्रार्थयितु न सज्ज आसम्॥

अहं किंकर्तव्यतामूढः स्थितः। कार्यरोषः समारोहति स्म। स्वतः कार्यं सार्वजनकं च कार्यमुभयं च कर्तुमशक्यमिव प्रत्यभात्। मम प्रयतनबाहुल्येऽपि 'युरोपियन' 'लेखकमे'कं नियोक्तु मैच्छम्। किन्तु मामिव सवर्णं पुरुषं सेवितुं गौरांगं गौरांगीं वा लब्धुं निश्चयो नासीत्। मम विदितपूर्वस्य 'टाइपरायटर'स्य नियोक्तारमेकं गत्वाहमपृच्छम्। 'स्टेनोग्राफर' संपाद्यानयेति। कन्या मिलन्ति स्म। तदेकामानेष्यामीति वाग्दानमकरोत्। 'स्कॉटलेण्ड'निवासिनी 'मिस डिक'नाम्नी तेन दृष्टा। सत्यजीवनं कर्तुं नास्त्याक्षेप इति सोक्तवती। तस्याश्चावश्यकतासीत्। तामानीय नियोक्ता मम प्रादात्। तत्क्षणं सा मामन्वरंजयत्। अहं तामपृच्छम्—भारतीयपार्श्वे सेवां कर्तुं किमाक्षेपोऽस्ति? नहीति दृढं प्रत्युत्तरमागतम्॥

कियद्वेतनं वाञ्छसि।

सार्धाधिकसप्तदशपौंड नातीवेति मन्यसे।

मया वाञ्छितं कार्यं करोषि चेन्नातीव। कदा कार्यायागमिष्यसि।

भवदिच्छायामेतत्क्षणमेव॥

अहमतीव संतुष्टः। तत्क्षणमेव लेखान्वाचयित्वा लिख्यतामित्यवोचम्॥

अचिरादेव सा न केवलं वर्णसंकरलेखिका (stenotypist) परन्तु मम दुहिता भगिनी वा प्रवृत्ता। तस्याः कार्ये स्खलितं द्रष्टुमवकाशं सा प्रादात्। असकृत्सा सहस्राधिक-पौंडमितद्रव्यस्योपयोगे नियुक्तायव्ययपुस्तकानि च न्यक्षिपत्। सा मम संपूर्णविश्वासपात्रीबभूव। अधिकं च वक्तव्यम्। यदेषा स्वांतर्गतचिंता भावनाश्च मयि विश्वस्य कथयति स्म। पत्युरन्वेषणवादं मामपृच्छत्। विवाहे तस्याः प्रतिपालगौरवं ममैवासीत्। 'मिस डिक' यदा

मॅकडोनल्डपाणिग्रहणमकरोत्तदा मां पर्यत्यजत् । अथापि विवाहानंतरं कार्यवशादाहूता प्रतिवचनमदादेव ॥

किन्त्विदानीं तस्याः स्थानेऽपरा 'स्टेनोटाइपिस्ट' अपेक्ष्यते स्म । अदृष्टवशादन्या च लब्धा । सा च 'मिस श्लेसिन' यामहं परिचायितः कॅलनबॅकमहाशयेन । इमं महाशयं वाचकः क्रमेण ज्ञास्यति । सेदानीं ट्रान्सवालप्रदेशवर्त्युच्चविद्यालयानामेकस्मिन्नध्यापिकाभूत् । यदा सा मत्पार्श्वमागता तदा सप्तदशवर्षदेशीयासीत् । कतिचित्तस्या विलक्षणभावाः कॅलनबॅकमहाशयस्य मम च कदाचिद्दुःसहा आसन् । वर्णसंकेतलेखिकाकार्यं कर्तुं सा नागता किन्त्वनुभवं लब्धुम् । असितांगगौरांगेति वर्णेत असूया तस्याः स्वभावस्यातिदूरे । तस्या वयो वाऽनुभवो वा न किंचिन्मनस्यासीत् । यं कंचिदधिक्षेप्तुं वा यस्य कस्यापि मुखत एवैतादृशत्वमिति वक्तुमपि निश्चितवत्यासीत् । तस्या आतुरोऽविवेको मां बहुवारं संकटेऽपातयत् । किन्तु तस्याः शुद्धनिर्दोषस्वभावस्तानि संकटान्युत्पन्नमात्राणि दूरमपास्यत् । तस्याः 'टाइप'कृतपत्राणि पुनरालोकनं विना स्वाक्षरीकृतवानस्मि । यतस्तस्या आंग्लभाषा मदीया निर्दुष्टासीदित्यहममंसि । तस्या भक्तौ मम संपूर्णविश्वास आसीत् ॥

सा बहुनष्टमन्वभूत् । चिरकालं मासे मासे षट् पौंडमितं द्रव्यं गृह्णाति स्म । प्रतिमासं दशपौंडमिताद्धनादधिकं ग्रहीतुं नेति वक्ति । अधिकं गृहाणेत्युक्ता मामधिक्षिप्य ब्रवीति यथा वेतनार्थमहमत्र न स्थास्यामि । यतोऽहं भवता सह कार्याणि कर्तुं स्थितास्मि । इष्टा मे तवोपदेशाः ॥

एकदा सा मत्सकाशाच्चत्वारिंशत्पौंडद्रव्यमृणीकृत्य गृहीतवती । व्यतीते वत्सरे पूर्णं धनं मे प्रादात् । तस्या धैर्यं तदीयत्यागकृतेः समानमासीत् । इयमेका स्त्री मया दृष्टा यस्याश्चारित्रं मुक्ताफलमिव निर्दुष्टं यस्याश्च धैर्यं भयस्यापि त्रपाकारिणम् । इदानीमेव वयःस्था युवतिर्मया सह यदा स्थिता तत्काले तन्मनसो वृत्तिर्यथासीत्तथेदानीमपि वर्तते न वेति न जाने । परंत्वेतया सह परिचयो मे पवित्रा स्मृतिर्भवति । सत्यादहं भ्रष्टो भवेयं यदि जानन्नपि तद्विषयान्निगूहेयम् ॥

अंगीकृतपक्षस्य कृते सा रात्रिं दिवं प्रयस्यति । रात्रावंधकारे कार्यवशाद्गच्छति स्म । सहयायिनमेकं नयेति सूचिता क्रोधेन सूचनां निराकरोति । सहस्राधिको बलिष्ठभारतीयजनस्तामेव मार्गदर्शिकामपश्यत् । सत्याग्रहदिवसेषु प्रायः सर्वे नायकाः कारागृहे स्थिताः । तदैकाकिनी सा समूहमचालयत् । लोकानां सहस्राणि तस्या वशे आसन् । पत्रव्यवहारा बाहुल्येन तद्वशेऽभूवन् । 'इंडियन ओपिनियन' समाचारपत्रं तदीयहस्तगतमासीत् । किन्तु सा न कदाप्यायासमभजत ॥

निरंतरमहं 'श्लेशन' विषये लिखेयम्। गोखलेमहाशयस्य गणनां निरूपयन्नियमध्यायमन्तं गमिष्यामि। मम सहकारिणः सर्वान् गोखलेमहाशयो व्यजानात्। तेषां बहुभिरयं सन्तुष्टः। असकृत्तत्कृते स्वाभिप्रायमदात्। सर्वेषां भारतीय'युरोपियन्' जनानां मध्ये श्लेशिनमहाशयायै प्रथमस्थानमदात्। तेन किलोक्तं-यथा इदृशस्त्यागः पवित्रताधैर्यशालित्वं कुशलता च मया अल्पेषु जनेषु दृश्यन्ते। भवतः सहकारिणां मध्ये 'मिस श्लेशिन' महाशयाग्रस्थानमाश्रयतीति॥

## त्रयोदशोऽध्यायः

# ' इंडियन–ओपिनियन '

अन्यैः परिचितयुरोपियनजनसंपर्कैः पुरोगमनात्प्राक् द्वित्राः प्रधानविषया निरूपणीयाः। संपर्काणामेकस्तावत्क्षणेऽस्मिन्नैव वक्तव्यः। 'मिस डिक' महाशयाया नियोगो ममोद्देशस्य पर्याप्ता नासीत्। अधिकसाहाय्यमावश्यकमासीत्। 'रीच' महाशयः पूर्वाध्यायेषु कथितः किल। अहमेनं सम्यगवेदिषम्। कस्मिंश्चिद्वाणिज्यस्थाने कार्यकर्ताधिकारी आसीत्। तमधिकारिणं परित्यज्य मत्पार्श्वे उद्योगकरणायागन्तुं सूचितः आगतोऽभूत्। एतेन मम भारोऽतीवलघूकृतः॥

प्रायेणैतत्कालं मदनजितमहाशय आगत्य 'इंडियन ओपिनियन' पत्रिकासंचालने ममाशयमपृच्छत्। पूर्वमेव मुद्रायंत्रमेकं चालयति स्म। अहं तस्याभिप्रायमन्वमंसि। चतुरुत्तरैकोनविंशतिसहस्रमिते वत्सरे (१९०४) पत्रिका संचलितुमारब्धा। 'मनसुखलाल-नाजर'महाशयः प्रथमपत्रिकास्वामी बभूव। परन्तु सर्वकालं पत्रिकास्वाधीनतां प्राप्य तस्य भारं वोढुमुद्युक्तोऽभवम्। मनसुखलालमहाशयस्तं वोढुमशक्त इति न। यदायं भारतदेशे स्थितस्तदा वृत्तान्तवाहनकार्यं बहुलं करोति स्म। किंतु दक्षिणाफ्रिकादेशे यावदहं स्थितः तावत्तत्रत्यदुष्करविषयेषु प्रवेष्टुं न धैर्यमकरोत्। मम विवेकदृष्टौ महती यस्य श्रद्धासीत्। अत एव पत्रिकाविषयलेखनेषु प्रतिवाक्यदायित्वं ममोपर्यपतत्। पत्रिकाद्यापि साप्ताहिकी भवति। गुजराती-हिन्दी-तामिल-आङ्गलभाषासु चलति। तामिल-हिन्दीविभागौ वञ्चनामयौ। यदुद्देशेन तावागतौ तदुद्देशं नैवापूरयताम्। अत एव तौ विरामं प्रापितौ। तयोः परिस्थितौ वञ्चनोद्गतास्यात्॥

पत्रिकार्थं यत्किंचिद्धनं प्रयोक्तव्यं स्यादिति न मे चिन्तासीत्। परन्तु शीघ्रमेव दृष्टं यन्मम द्रव्यसाहाय्यं विना चालयितुं न शक्यमिति। अपि च भारतीय 'यूरोपियन'जनानां विदितमासीद्यद्यपि नाहं पत्रिकास्वामी तथापि तस्य संचालनं मदायत्तमिति। पत्रिका नैव संजात

यदि न कापि चिंता । परन्तु संजाता तत्पश्चात् विरतेति चेद्द्रव्यनष्टमगौरवं च संभवेत् । इत्थं मम द्रव्यमुपयुंजानस्य यद्यद्रक्षितुं तत्सर्वं व्ययीकृतम् । तं कालमिदानीमहं स्मरामि यदा रूप्यकाणां पंचसप्ततिः प्रतिमासं मया प्रेषणीयाभवत् ॥

परंत्वेतेभ्यो वत्सरेभ्यः पश्चाज्जनसेवां पत्रिका सम्यक् कृतवती । सा वाणिज्यप्रयोजनाय नासीत् । मदग्रवर्तिन्यां पत्रिकायां दृष्टपरिवर्तनानि मम जीवने या न्यासन् तानि प्रदर्शयन्ति । अद्य 'नवजीवन' 'यंग इंडिया 'च यथा भवतस्तथा तेषु दिवसेषु 'इन्डियन ओपिनियन 'मम जीवित-मार्गस्य दर्पण इवासीत् । वारं वारं मदात्मानं तत्र प्रसार्य सत्याग्रहस्य नियमान् अभ्यासविधानं च यावन्मे विदितं तावददर्शयम् । दशवत्सराणां मध्ये चतुर्दशोत्तरैकोनविंशति (१९१४) वत्सर-पर्यन्तं कारागृह आत्मनो दत्तविश्रांतिकालावकाशाद् विना 'इंडियन ओपिनियन ' पत्रिकायां प्रत्येकायां मम लेखनमासीदेव । तत्र मम लेखनेष्वालोचनां सम्यग्विवेचनां च विना नैकोऽपि शब्दः प्रयुक्तः । न चातिशयेन निरूपणं कृतम् । न च किंचिदन्येषां हर्षाय मयाभिहितम् । ममात्मनिग्रहाभ्यासाय सुहृदां च मन्मनोगतस्य निवेदनाय पत्रिकोपयुक्ताभूत् । सदसद्विमर्शकस्य न कोऽप्याक्षेपणीयो विषयो दृष्टः । 'इंडियन ओपिनियन ' पत्रिकायास्तादृशी वृत्तिरासीद्यादृशीं विलोक्य विमर्शकः स्वलेखन्या उपरि निग्रहं पातुं वलात्कृत आसीत् । 'इंडियन ओपिनियन ' पत्रिकां विना सत्याग्रहः साधयितुमशक्योऽभूत् । वाचकाः सत्याग्रहवृत्तान्तवेदनाय पत्रिकां निरीक्षन्ते स्म । अपि च दक्षिणाफ्रिकाप्रदेशे भारतीयजनो निजपरिस्थितिं विज्ञातुं निरीक्षते स्म । मम तु मानुषस्वभावस्य सर्वरूपेषु परीक्षणाय साधनमासीत् । मम पत्रव्यवहारिणां पत्रप्रवाहेनाहमूढोऽभवम् । लेखकस्य स्वभावानुरूपं तानि पत्राणि सौहार्दरूपकानि सदसद्विमर्शरूपाणि विषमयानि चासन् । मम तावदेष समीचीनोऽभ्यासो जीर्णकारी मार्गश्चासीत् । प्रतिवचनदानं च तावतः पत्रव्यवहारस्य मदायत्तं च । जनो मया सह संभाषणं पत्रव्यवहारेण करोतीव प्रत्यभात् । पत्रिकासंचालकस्य प्रतिवचनदायित्वं इत्थमीदृशमिति मे ततो विदितम् । ईदृक्प्रकारेण जनस्योपरि प्राप्तं तद्ग्रहणं भविष्यत्कार्यजातमकरोत्सुकरं प्राप्तगौरवं दुराधर्षं च ॥

'इंडियन ओपिनियन ' संचालनस्य प्रथममासमेव ज्ञातं यत्पत्रसंचालनस्योद्देश लोकसेवेति । समाचारपत्रिकामुद्रायन्त्रं नाम महती शक्तिः । किन्तु यथानियंत्रितो जलप्रवाहः समस्तग्रामदेशान् जलांतर्नीत्वा सस्यानि विनाशयति तथैवानिगृहीता लेखनी नाशमात्रं करोति । यदि निग्रहो वहिष्ठः स्यात्तदा निग्रहशून्यतापेक्षया विषमयः संघटेत । अंतस्थः संचालने तु लाभकारी स्यात् । यद्येतावद्वचनं समीचीनं तदा प्रपंचे स्थिताः कियत्यो वृत्तान्तपत्रिकाः परीक्षामुत्तरेयुः । निरुपयुक्तान् को वा स्थापयेत् । उपयुक्ता अनुपयुक्ताश्च सदसदिव सह गच्छन्ति । मनुष्यः स्वयमेव चिनुयात् । परिग्रहाय परित्यागाय वा ॥

## चतुर्दशोऽध्यायः

# 'कुली'स्थानानि अथवा 'घेटो'

अतिमहता लोकसेवामस्माकं कुर्वतः कतिचिद्वगा अस्माभिर्हिन्दुजनैरस्पृश्यत्वेन पत्तनस्य ग्रामस्य वा दूरे 'ढेडवाडो' इति गुजरातीभाषायामुक्तास्तन्नामधेयं च दुर्वासनामयमिव तिष्ठति। इत्थमेव 'क्रिश्चियन युरोप' प्रदेश एकदा 'यहूदी' जना अस्पृश्या इत्युक्ताः 'घेटो' इति दुर्नामधेयेनाहूताः। तथैव वयमपि दक्षिणाफ्रिकादेशे अस्पृश्याः संभूताः। ॲन्ड्रुझमहाशयेन कृतो यज्ञोऽपि च शास्त्रे गृहीतं भूतयंत्रमस्मान्पूर्वस्थानं प्रापयिष्यतः॥

पुराण'यहूदी'जनः आत्मानमेव भगवतानुगृहीतं मन्यते स्म। इतरान् सर्वानप्यन्यथाभूतान् मेने। अत एव तद्वंशजाः सर्वेऽपि न केवलमाश्चर्यकरमपि त्वन्याय्यं प्रतीकारं भेजिरे। तथैव हिन्दुजना अप्यत्मानमार्यान्नागरिकान् मन्यन्ते। स्वेषामेवाङ्गभूताञ्जनान् प्राकृतानार्येत्यादिकमाकलयन्ति। अत एव ते तस्यान्यायस्य फलमनुचितविचित्रप्रकारेण दक्षिणाफ्रिकादेशे अनुभवन्ति। एवं च समानदेशस्थाः समानवर्णयुक्ताश्च 'मुसलमान-पारसी' जना अपि तादृशफलभाजभूता इति मे मतिः॥

वाचकस्येदानीं विदितं स्यादर्थेऽध्यायस्य शिरोवचने कुलीस्थानानीति प्रोक्तस्य। दक्षिणाफ्रिकादेशेऽस्माकं कुलीति नामधेयम्। भारतदेशे कुलीत्यस्य द्वारपाले भाटकगृहीतः कर्मकर इत्यर्थः स्यात्। अपि तु दक्षिणाफ्रिकादेशे तस्य तिरस्कारणीयो भावो वर्तते। यथास्माकं अर्थोऽस्पृश्यो भवति तथा। तेषां नियुक्तवसतिस्थानानां कुलीस्थानमिति निर्देशः। 'जोहानिसवर्ग' प्रदेशे तादृगेकं स्थानमासीत्। किंतु कुलीस्थानयुक्तेष्वन्यप्रदेशेषु भारतीयजनानां निवासाधिकार आसीत्। जोहानिसवर्गकुलिस्थाने भारतीय जना एकोनशतवत्सरपर्यन्तं निवस्तुमनुज्ञा गृहीत्वा स्थिताः। तत्स्थानं जनबहुलमासीत्। जनसंख्या वर्धते स्म। स्थानविस्तारस्तु यथापूर्वमेवैकरीत्या स्थितः। 'नगरपालिका मलमूत्रविसर्जनस्थानान्याकस्मिकरीत्या स्वच्छीकरोति स्म। आरोग्यसंविधानानि न किंचिदकरोत्। मार्गव्यवस्था दीपसंयोजना च नास्त्येव। निवासिनां योगक्षेमं विचारयितुमुदासीनतायां तस्यारोग्यरक्षणं करोतीति को विश्वासः। न खल्वेते जानन्ति गृहारोग्यविधानं शरीरारोग्यरक्षणं च नगरपालिकासहाय्यं तत्परीक्षणं च विना। तत्र गताः सर्वेऽपि भारतीया यदि 'रॉबिन्सन् क्रूसो'ऽभविष्यत्तदा तेषां कथान्यैवाभविष्यत्। जगत्यस्मिन् 'रॉबिन्सन् क्रूसो'– स्थापितमेकमपि स्वास्थ्यं न जानीमः। सामान्यतो जना द्रव्यवाणिज्यार्थे वहिर्गच्छन्ति। परंतु दक्षिणाफ्रिकादेशं गतेषु भारतीयेषु प्रायो भूयिष्ठा मूर्खा निर्गतिकाश्च कृषिका वभूवुः। आदरपूर्वकं रक्षणं सर्वेमपि तेषामावश्यकमासीत्। वहुस्वल्पा व्यापारिणः

सुशिक्षिताश्च भारतीयास्ताननुसृता आसन्। पौरसभायाः 'क्रिमिनल' अजागरूकता कृतवसतीनां भारतीयजनानां मूर्खता च स्थानमारोग्यशून्यं कर्तुं व्यवस्यताम्। पौरसभामुत्तमरीतिमापादयितुमुक्त्वात्मकृतमनारोग्यमेव कारणीकृत्य स्थानं विनाशयितुं प्रयेते। तदुद्देशेनैव निवासिनः स्वार्थशून्यान् कर्तुं अधिकारिभ्योऽनुज्ञां प्राप। एषा किलासीद्रीतिर्यदा जोहनिसवर्गस्थाने कृतनिवासोऽहमासम्॥

स्वस्वभूमिष्वधिकारयुक्ता निवासिने नष्टप्रतीकारद्रव्यमाप्तुमधिकारिणो बभूवुः। भूग्रहणविषयान् परीक्षणीयान्परीक्षितुं विशिष्टन्यायस्थानमेकं स्थापितमासीत्। यदि गृही पौरसभया प्रदेयं नांगीकर्तुमैच्छत्तदा न्यायस्थानं गच्छेत्। अथ न्यायस्थानस्य निर्णये पौरसभया देयाधिकं दत्तं चेत् पौरसभा तावद् व्ययद्रव्यं सहेत॥

प्रायः सर्वे गृहिणो मामेव स्वेषां 'वकीलं' चक्रुः। एतान्परीक्षणीयान्विषयान्गृहीत्वा द्रव्यमर्जयितुं न मेऽभिलाषासीत्। न्यायस्थानं यावत्प्रदेयद्रव्यमाज्ञापयत्तावता संतुष्ये यद्यमी विजयिनः स्युः। कृषिगृहीतासु भूमिषु प्रतिभुदशपौंडमितं धनं मे देयं स्यात्। फलितं यथा कथाचिद्भवतु नाम। अहं तान् पुनरवोचं युष्माभिर्दत्तद्रव्येष्वर्धभागं निष्किंचनानामुपयोगाय वैद्यशालां वेतरसंस्था वा प्रतिष्ठापयितुं प्रयुज्मह इति। एतत्तान् सर्वानानन्दयत्॥

सप्ततिः परीक्षणीयविषयाः। तेष्वेकमेव निष्फलमासीत्। अतो मे प्रतिग्रहाद्द्रव्यस्य महती संख्या प्राप्ता। किन्तु तत्रासीद् 'इंडियन ओपीनियन' पत्रिका तदर्थं ममोपरि रूप्यकाणां षोडशसहस्राणि व्ययः संवर्तते स्म। एतावत्परीक्षणीयविषयार्थे मया महान् क्लेशोऽनुभूतः। व्यवहारिणः सर्वदा मत्समन्तात् स्थिताः। प्रायेण सर्वेऽपि ते संमतिबद्धाः कर्मकरा बिहारतत्परिसरप्रदेशाद्दक्षिणभारतप्रदेशाच्चागताः। तेषां विलक्षणक्लेशपरिहाराय स्वीयः संघ एकः कल्पितः। स च वणिजां क्रयविक्रयिणां च स्वतंत्रसंघादन्यः। तेषां कतिचित् सहृदया उदारपुरुषा उच्चचरित्रसंपन्नाश्च। तेषां नायकाः संघाध्यक्षो 'जयरामसिंग्' इत्येकः सभाध्यक्षसमानो बद्रिमहाशयः। इदानीमुभयेऽपि मृताः। तौ ममातीव साह्यकारिणावास्ताम्। बद्रीमहाशयो मम समीपसंपर्कं गतः सत्याग्रहे प्रधानभागमुवाह। एषामितरेषां च सुहृदां संपर्केनोत्तरदक्षिणभारतादागतैर्निःसंख्यैर्भारतीयनिवासिभिः समीपसंपर्कं गतोऽहम्। न केवलं 'वकीलः' परन्तु भ्रातेव स्थितस्तेषां स्वकीयसार्वजनिककार्येषु दुःखसंकटेषु च भागी अभवम्॥

भारतीयजनः कथं मामाह्वयन्निति ज्ञातुं समीचीनमस्ति। अब्दुल्लाशेठमहाशयो मां गांधिरित्याह्वातुं निराकरोत्। अदृष्टवशान्न कोऽपि मां 'साहेब' इत्याभिधानेनाप्यनिन्दन्। अब्दुल्लाशेठमहाशयो रमणीयनामधेयं 'भाई' इति भ्रातरिति वा जगाद। यावद्दक्षिणाफ्रिकादेशमत्यजं तावत्तन्नाम्नेतरेऽप्याह्वयांचक्रुः॥

भारतीयजनैः संमतिबद्धैः कर्मकरैरुपयुक्ते नामधेये कश्चिन्मधुरो रस इवास्तीत्यभात्॥

# असितप्लेगोपद्रवः ( १ )

**पौरसभायाः** स्वीयताप्राप्तेरचिरादेव भारतीयजनः स्थानान्नापनीतः । गृहेभ्यो बहिष्करणात्पूर्वं तत्तद्योग्यवसतीः प्राप्तुमावश्यकमासीत् । किन्तु पौरसभायाः सौलभ्येनेदं कर्तुमशक्यमासीत् । अत एव भारतीयजनाः पूर्वस्मिन्नशुचिस्थान एव वर्तितुमनुज्ञाताः । तस्य फलितं च तदवस्था पूर्वापेक्षया हीनतराभूत् । स्वामित्वाद्विरम्येदानीमधिवासिनोऽभूवन् । अतः परिवेष्टकप्रदेशा अनारोग्यमया बभूवुः । तादृगनारोग्यस्थितिदृष्टपूर्वा । यदा ते स्वामिनः स्थितास्तदा शासकभयादपि यत्किंचिच्छुचित्वरक्षणं कर्तुं व्यवसिता आसन् । पौरसभायास्तादृशं भयं नासीत् । गृहस्थायिनां संख्या वृद्धिमागात् । एतेनाशुचित्वं क्रमभंगश्च ववृधे ॥

यदा भारतीयजना एतादृक् स्थानानुभवेन व्यथिता आसन्' तदाकस्मादसितप्लेगुपद्रवः संबभूव । तमेनं ' न्यूमोनिक' प्लेगेत्यपि वदन्ति । इदं ' बूबोनिक ' अपेक्षया भयंकरं मृतिकारकं च ॥

एतद्रोगोत्पत्तेः कारणं जोहानिसबर्गपरिसरे सुवर्णखनिरेका ॥ अस्मिन्नाकरे कर्म कुर्वन्तो जनाः प्रायः सर्वे निग्रोपदवाच्याः । एषां शुचित्वरक्षणाय गौरांगा नियोगिनः सर्वथा प्रत्युत्तरदायिन आसन् । कतिचिद् भारतीयजना अपि खनिसंबंधे कर्म कुर्वन्ति स्म । तेषां त्रयोविंशतिरेतद्रोगेनाकस्मात् परिग्रस्ता सायंकाले स्ववसतीराजग्मुः । तत्काले मदनजितमहाशयः ' इंडियन ओपिनियन ' पत्रिकार्थं ग्राहकानन्वेषयति स्म । कृतकार्यः स्थानेऽस्मिन् क्षणं स्थितः । स किल निर्भयः प्रसिद्धपुरुषः । तस्य हृदयमेतान् रोगग्रस्तान् वीक्ष्य क्रंदति स्म मत्सकाशं लिखिताक्षरं लेखमेकं प्रैषयत् । यथाकस्मादसितप्लेगोपद्रवः प्राप्तः । एतत्क्षणमेवागम्य शीघ्रं यथायुक्तं संविधानं कर्तव्यम् । नो चेद्वयं भयंकरान्परिणामान् द्रष्टुमर्हामः । एतत्क्षणमेवागन्तव्यमिति ॥

धीरो मदनजितमहाशयः शून्यगृहस्यैकस्य बंधनं भित्त्वा रोगिणः सर्वान् तत्र स्थापयामास । अहं स्थानं प्रति पादनोद्ययानेन गत्वा पत्तनलेखकस्य न्यवेदयं गृहं स्वाधीनीकृतसंदर्भान् ॥'

डॉ. विल्यम–गॉडफ्रेमहाशयः समाचारमाकर्णितमात्र एव स्वकार्यालयादागत्य वैद्यस्य कर्म धात्रीकर्म चोभयं निर्वहति स्म । किन्तु त्रयोविंशतिरोगिणां परीक्षणाय वयं त्रयो नालमभूम ॥

अस्तीयं मे श्रद्धा स्वानुभवमाश्रिता यदेकस्य हृदयं स्वच्छं स्याद्यदि संभवन्नुपद्रवः सहैव तत्प्रतिशोधनाय पुरुषानुपायांश्चानयति । मम कार्यालये तदा चत्वार भारतीयजना आसन् । ते च

'कल्याणदास-माणिकलाल-गुणवन्तरायदेसाई' अपि च चतुर्थोऽन्यो यस्य नामधेयं नेदानीं स्मरामि । कल्याणदासमहाशयः स्वपित्रा मद्वशे स्थापितः । कल्याणदासमहाशयापेक्षयाधिकमुपकारिणं मनःपूर्वकतया परमविधेयं च प्रायो नैव दृष्टवान् । अदृष्टवशात्तदानीमयमनूढ आसीत् । महांत्यपायायुक्तानि तस्य दत्वा कारयितुं नैव विकल्पं प्राप्तवानहम् । जोहानिसबर्गपत्तने माणेकलालमहाशयो मे प्राप्तः । यथाहं स्मर्तुं शक्तस्तथा सोऽप्यनूढ एवासीत् । अतोऽहं चत्वारोऽपि लेखकाः सहकारिणः पुत्रा वा भवतु तानाहुतीकर्तुं निरणैषम् । अन्ये तु सज्जा वयमाहूतास्तिष्ठामः इति । यत्र भवांस्तत्र वयं चेत्येषामल्पं मधुरं च प्रत्युत्तरमासीत् ॥

रीचमहाशयस्य कुटुंबो महान् । स च लंघितुं सज्जस्थितः । किंत्वहं तं प्रत्यरोधयम् । अपाये पातयितुं तं मम हृदयं न धीरमासीत् । असावपायवलयाद्बहिरेव कार्यं करोति स्म ॥

सा भयंकरी रात्रिः । जागरपरिपोषणाभ्यां रोगिणो मयोपचरिताः । किंत्वसितप्लेगोपद्रवग्रस्तो न कोऽपि । डॉ. गॉडफ्रेमहाशयस्य धैर्यं सांक्रामिकमिवासीत् । परिपोषणकृत्यं न बहुलमावश्यकमासीत्। पानायौषधमात्रापेक्षितस्य विधानं रोगिणः शयनीयं च स्वच्छशुचीनि कृत्वा स्थापनं रोगिण आनंदनमेतावदेव कर्तुमावश्यकं बभूव ॥

तरुणानामतिमहतीं श्रद्धां निर्भयतां च दृष्ट्वा ममातिमात्रमानन्दोऽभूत् । मदनजितसदृशस्यानुभवशालिनः पुरुषस्य धैर्यं जानीमः । किन्तु निर्वासिसां तरुणानामेषां स्वभावं कथम् ॥

यावदहं स्मरामि तावत्तद्रात्रौ सर्वे रोगिण उपचरिताः ॥

परन्तु सर्वोऽयं विषयः करुणारसजनको मम धर्मसारो वर्तते च । तस्मात्प्राय अध्यायद्वयं तदर्थे उदाहरिष्यामः ॥

## षोडशोऽध्यायः

# असितप्लेगोपद्रवः (२)

**शून्यगृहं** रोगिणश्च मद्वशे गृहीतवानिति कृतज्ञतां प्रादर्शयन्नगरलेखकः । स च सरलतयाङ्गीचकार यदिदानीमेवेदृशाकस्मिकसंभवान् प्रतिरोद्धुं नगरसभायाः साधनं नासीत् । परन्तु यावच्छक्यं सर्वमपि साहाय्यं दीयत इति वाचं ददौ । कर्तव्यं प्रत्येकदा जागरिता नगरपालिका कार्यानुष्ठाने विलम्बं न चकार ॥

परेऽहनि शून्यशालामेकां मद्वशे कृत्वा तत्र रोगिणोऽपतीयन्तामिति सूचयामासुः । परन्तु पौरसभास्थानानि शोधयितुं नाङ्गीचकार । गृहमशुद्धमसंमृष्टं स्थितम् । वयमेव तदशोधयाम ।

धार्मिकभारतीयकार्यालयात् कतिचिच्छयनान्यपि चान्यान्यावश्यकानि संपाद्य तात्कालिकीमेकां वैद्यशालामकल्पयाम । पौरसभा त्वेकां सेविकां प्रैषयत् । डॉ. गॉडफ्रेमहाशयस्वाधीनतायां वैद्यशाला स्थिता ॥

सेविका दयालुः स्त्री । रोगिणः परामर्शने सानंदा संमतिं ददाति । परन्तु तान्प्रष्टुमपि नानुज्ञाता । मा तावत् स्वयं रोगेण कृतसंक्रमाभूदिति ॥

रोगिणां पदे पदे मद्यौषधमात्राः प्रदातुमस्माकमनुज्ञासीत् । सेविका जागरयास्मानपि ग्रहीतुमब्रवीत् । स्वयं सा तथा करोति स्म । अस्मासु न कोऽपि तत् स्पृशति स्म । रोगिणा-मप्युपयोगोऽनेन भविष्यतीति मे श्रद्धा नासीत् । गोडफ्रेमहाशयस्यानुज्ञामादाय मद्यमनिच्छतस्त्रीन् रोगिणो मृत्तिकाचिकित्सामग्राहयम् । आर्द्रमृत्तिकाबंधनानि तेषां हृदयेषु शिरस्सु च निक्षेप्तव्यानि । एवं द्वौ रक्षितौ । अन्ये विंशतिर्पण्यसंग्रहशालायामेव मृता बभूवुः ॥

एतदन्तरे पौरसभान्यानि कार्याणि करोति स्म । जोहनिसबर्गनगरात् त्रिक्रोशदूरे सांक्रमिकरोगचिकित्सायै चर्मरोगशालैका स्थिता । सजीवौ द्वौ रोगिणौ चर्मरोगशालायाः समीपे पटमंडपेषु स्थापितौ । तत्र नूतनरोगिणः प्रेषयितुं संविधानानि क्रियमाणान्यासन् । वयमित्थमस्मत्कार्यान्मुक्ता अभूम ॥

केषुचिद्दिवसेषु गतेषु साध्वी सेविका रोगग्रस्ता मृता च । कथमेतौ द्वौ रोगिणौ रक्षितौ वयं विमुक्ता इति वक्तुमशक्यम् । परंत्वयमनुभवो मृत्तिकाचिकित्सायां मे श्रद्धामवर्धयत् । मद्यमौषधरूपेण वास्तु । तदुपयुक्ततायाः संशयो मे स्थितः । इयं श्रद्धा चायं संशयो वा पर्याप्तकारणाधारौ न स्त इत्यहं जानामि । किन्तु तदानीमागता भावनाद्यापि रक्षितेत्यत्र तद्वक्तुमावश्यकमित्यमंसि ॥

आगते प्लेगोपद्रवे मुद्रायंत्रतः प्रसाराय तस्यैकं बलवल्लेखनमकार्षम् । यथास्थानं पौरसभाया वशमागतम् । ततःपरं सानवधानाभूत् । तस्यैवायमपराध उपद्रवसंभवस्य कारणीभूतोऽयं प्रत्युत्तरवादीति । अयं लेखः हेनरीपोलाकमहाशयं समपादयत् । तन्मुखेन माननीयजोसेफडोक-महाशयस्य मैत्री प्राप्ता ॥

उक्तं मया पूर्वतराध्याये यच्छाकाहारिणां भोजनालये मया भुज्यते स्मेति । अत्र हि आल्बर्ट—वेस्टमहाशयेनाहं संगतवान् । अस्मिन्भोजनालये प्रतिसायमागम्यते स्म । भोजनान-न्तरं बहिः सह चलन्तौ स्वः । वेस्टमहाशयः क्वचिदल्पायां मुद्रासंस्थायां भागमुवाह । स च मुद्रांकितं चक्रे । प्लेगोपद्रवसंभवं मम लेखं दृष्ट्वा भोजनालये मामनवलोक्य दुःखितोऽभूत् ॥

उपद्रवादनन्तरं सहकारिणोऽहं च भोज्याहारमल्पीकृतवन्तः । महारोगसंभवे लघुभोजनं नियमेन क्रियते स्म । अत एवैतेषु दिवसेषु सायंभोजनं परित्यक्तवान् ॥

अल्पाहारं चेतरभोक्तृणामागमनात्पूर्वमेव समापयम् । भोजनालयस्य स्वामी मे सम्यक्

परिचितः । प्लेगरोगिणां चिकित्सायां निरतोऽहं मित्राणां संपर्कं यावच्छक्यं दूरीकर्तुमिच्छामीति मयासौ निवेदितपूर्वोऽभूत् ॥

भोजनालये दिनद्वयान्मामदृष्ट्वा वेस्टमहाशयः प्रातस्तरामेकदा बहिः परिक्रमाय गन्तुं सज्जस्थिते मयि कवाटं कुट्टितवान् । द्वारमुद्घाटयम् । भोजनालये भवन्तं नाद्राक्षम् । अतोऽहं वस्तुतो भीतो भवतः किंचिदप्यापतितं स्यादिति । अतः समागत्य भवान् प्रातः गृहे स्थास्यतीति श्रद्धयागतोऽस्मि । बाढम् । अत्राहं स्थितः । भवद्देशे रोगिणः प्रतिपालयितुं साहाय्यदाने सज्जस्थितोऽस्मि । मदायत्तः कोऽपि नास्तीति भवान् जानाति ॥

कृतज्ञोऽस्मीत्युक्त्वा निमेषार्धमप्यालोचयितुमगृहीत्वा मया प्रत्युक्तं यथा — धात्रीकृत्यस्य त्वामहं न गृह्णीयाम् । एकद्विदिनेषु वयमितो विमुक्ता भविष्यामो नाधिका रोगग्रस्ताः संभवन्ति चेत् । किंत्वेकोऽस्ति विषयः ॥

को न्वयम् ? डरबनपत्तने 'इंडियन ओपिनियन' मुद्रायंत्रं भवद्देशे स्थापयितुं किं मन्यसे । मदनजिन्महाशयस्यात्रैव कार्यं विद्यते । डरबनपत्तनैक आवश्यकः । यदि गच्छेद्भवांस्तदर्थमहं विमुक्तो भविष्यामि ॥

मद्देशे मुद्रायंत्रमेकमस्तीति भवान् वेत्ति । प्रायो गन्तुमहं शक्नोमि । परंतु प्रत्युत्तरं सायं दास्यामि । सायंकालपरिक्रमे संभाषावहे ॥

परितुष्टोऽहमभूवम् । संभाषणं वृत्तम् । गन्तुं संमतिमदात् । वेतनं तस्य न गणनीयमासीत् । वेतनार्जनं तस्य नोद्देश आसीत् । प्रतिमासं दशपौंडवेतनम् । अपि च लाभे सति तदेको भाग इति व्यवस्थापितम् । परेऽहन्येव वेस्टमहाशयः सायंकालीन'मेल'शकट्यां डरबनपत्तनाय प्रतस्थे । तस्याधमर्णैरितरैर्देयं मया प्रत्युपलब्धव्यम् । यदाहं दक्षिणाफ्रिकासमुद्रतीरमत्यजं तावत्पर्यन्तमयं मम सुखदुःखेषु भागी स्थितः ॥

वेस्टमहाशयो लाउथपत्तने कृषीवलकुटुंबे जातः । सामान्यविद्याभ्यासं प्राप्तः । परंत्वहं ममानुभवशालायामात्मसाहाय्यमात्रमुपलभ्य स्थितः । जानामि तं परिशुद्धं गंभीरवृत्तिं भगवद्भीरुं परोपकारशीलं च ॥

तद्विषयेऽधिकतरं च तस्य कुटुंबं चागाम्यध्यायेषु ज्ञास्यामः ॥

सप्तदशोऽध्यायः

# घस्मरं कूलीस्थानम्

**यद्यपि** मे सहकारिणोऽहं च रोगिणां रक्षणाद्विमुक्तास्तथाप्यसितप्लेगोपद्रवसंबद्धा' बहवो विषयाः स्थिताः। कूलीस्थानविषये पौरसभाया अनवधानता प्रत्युक्तपूर्वा मया। परन्तु सा गौरांगनिवासिनामारोग्यविषयेऽतीवजागरूकासीत्। तेषामारोग्यरक्षणाय बहुधनं व्ययीकृत्येदानीं प्लेगविध्वंसनाय बलाभिषेकमिव धनाभिषेकं चकार। भारतीयजनस्योपरि पौरसभया कृतेषु बहुषु लोपदोषेषु प्रदर्शितेषु गौरांगनिवासिनां कृते तदौन्मुख्यं दृश्यते। तस्याः प्रशंसनीयप्रयत्नेषु यावच्छक्यमहं साहाय्यमकरवम्। मम सहकारिता त्यक्ता भविष्यच्चेत्तस्याः कार्यं साधयितुं कष्टतरमभविष्यत्। सा सेनाप्रयोगमप्यकरिष्यदित्यस्ति मे भावना॥

परन्तु सर्वमेतत्परिहृतम्। पौरसभाधिकारिणो भारतीयजनस्य चारित्रेण संतुष्टाः। प्लेगविषयकस्य भविष्यत्कार्यस्यानुष्ठानं सुकरं जातम्। पौरसभाया आकांक्षामनुसृत्य वर्तनीयमिति भारतीयजनेषु यावती मे शक्तिस्तावती प्रयुक्तत्रान् साधयितुम्। भारतीयजनः सर्वमपि कार्यं कर्तुमशक्तोऽपि ममाज्ञामुल्लंघ्य नैवावर्तत। इदमहं स्मरामि॥

कूलीस्थानं प्रबलरक्षामुखे स्थापितम्। अंतर्बहिश्च गमनागमनाय यथा न शक्यमासीत्। मम सहकारिणां च निर्मुक्तानुज्ञापत्राण्यासन्। आसीत्किलायं निर्णयः स्थानस्य सर्वे निवासिनः स्थानं परित्यज्यान्यत्र गच्छेयुः। जोहानिसबर्गप्रदेशात् सप्तक्रोशदूरे समभूमिस्थले स्थूलपटमंडपेषु त्रीन् सप्ताहान् वसेयुः। ततश्च स्थानमग्निदग्धं कुर्यात्। पटमंडपेषु संभारानन्यदावश्यकद्रव्यं चानीय निक्षेप्तुं पर्याप्तः काल आवश्यक आसीत्। एतदन्तरे कश्चिद्रक्षकश्चावश्यकस्तिष्ठेत्॥

निवासिनो भयंकरत्रासयुक्ता आसन्। परन्तु मम सार्वदिकी स्थितिः किंचित् समाधानमकरोत्। अकिंचना बहवो जनाः स्वरक्षितं स्वल्पमपि भूमेरन्तर्न्यक्षिपन्नेतदुत्खाय द्रष्टव्यमापतितम्। तेषां द्रव्यस्थापनकोशो नासीत्। ते न कंचिदजानन्। अहं तेषां ( बेंकर ) कोशस्थापितद्रव्यग्रहीताभवम्। द्रव्यप्रवाहा मम कार्यालये निपेतुः। तादृशकार्यनिर्वाहक्षणे मम प्रयासस्य शुल्कमादातुं न शक्यमासीत्। कथंचिन्मम कार्यं निरवाहयम्। कोशाध्यक्षो मे सम्यग्विदितः। एतानि धनानि भवत्पार्श्वे निक्षेप्तुं भवति प्रसंगः। बहूनि ताम्र-रजतनाणकानि स्वीकर्तुं न चिंतामाकलयन्। प्लेगोपद्रवस्थानेभ्य आगतानि धनानि स्प्रष्टुं तिरस्कुर्वन्तीति भयमासीत्। कोशाधिकारी मम सर्वरीत्या समाधानमकल्पयत्। कोशं प्रति धनप्रेषणात्पूर्वं रोगदोषपरिहारः कर्तव्य इति निश्चितम्। मम स्मृतौ षष्टिसहस्र' पौंड 'मितद्रव्यं कोशे न्यस्तमासीत्। येषां

वशे पर्याप्तं धनमासीत्तानहमवोचं न्यस्यतामिदं धनं प्रतिष्ठितन्याससरूपेणेति । ते तथा चक्रुः । यत्फलमेतदासीत्तेषां कतिपये वित्तकोशेषु वित्तविन्यासस्य संप्रदायं भेजिरे ॥

स्थाननिवासिनो विशिष्टशकटीद्वारा जोहानिसबर्गसमीपे 'क्लिपस्प्रुट'क्षेत्रं प्रति संचालिताः । तत्र ते पौरसभया सार्वजनिकद्रव्यव्ययेन संभारान् दापिताः । पटमंडपीयमेतत्पत्तनं सैनिकशिबिरमिवादृश्यत । अनभ्यस्तशिबिरजीवनाः क्लेशप्राप्ताः परपाटिमवलोक्याश्चर्यभरिता बभूवुः । परन्तु किमप्यनानुकूल्यं तैर्न सोढम् । प्रत्यहं मया पादनोद्यचक्रयानेन गम्यते स्म । चतुर्विंशतिहोराभ्यंतरे सर्वक्लेशं ते व्यस्मरन् । आनंदेन च जीवितुं प्रवृत्ताः । यदा यदाहं तत्रागमं तदा तान् गीतेन हासेन चानुभवतोऽद्राक्षम् । सप्ताहत्रयपर्यन्तमनावृतप्रदेशे स्थित्या स्पष्टमासीदारोग्यप्रकर्षः ॥

मम स्मृतौ निवासिनामागमनात्परेऽहन्येव स्थानमग्निदग्धमभूत् । पौरसभा दहनज्वालायाः किमपि रक्षितुमीषदपि लोभं नादर्शयत् । इमामेव वेलां तेनैव कारणेन क्रयविक्रयस्थाने स्थितं दारु सर्वं ददाह । दशसाहस्र'पौंड'मितद्रव्यं नष्टमन्वभूत् । पण्यस्थाने मृतमूषकाः कतिचिद् दृष्टा इत्येतदेव कारणं शीघ्रकरणाय ॥

पौरसभा बहुव्ययमसहत । परन्तूपद्रवस्य वृद्धिमवारयत् । पत्तनं पुनः सुखेन श्वासोच्छ्वासमकरोत् ॥

## अष्टादशोऽध्यायः

# एकपुस्तकस्यैंद्रजालप्रभावः

असितप्लेगोपद्रवो निष्किंचनभारतीयजनेषु मम प्रभावमवर्धयत् । मम कार्यं पर्यनुयोज्यतां च बहुलीचकार । 'युरोपियन'जनैः कतिचित्संपर्कास्तथा समीपपरिचिता यथा मे नैतिक्यां कर्तव्यतायां प्राचुर्यं चक्रुः ॥

यथा वेस्टमहाशयस्य तथा पोलाकमहाशयस्यापि परिचयं शाकाहारभोजनालयेऽकार्षम् । सायमेकदा स्वल्पदूरे विषण्णस्तरुणो मां द्रष्टुमिच्छामीति पत्रमेकं प्रैषयत् । मम भोजनमंचकपार्श्वमेहीत्यवोचम् । स तथाकरोत् ॥

तेनोक्तं यथा — अहं 'क्रिटिक' पत्रिकाया उपप्रकाशकः । मुद्रायन्त्रे प्लेगविषये भवतो लेखनमपठिषम् । भवान् द्रष्टव्य इति बलवतीच्छा जाता । इदानीं तत्समयः प्राप्त इति संतुष्यामीति ॥

पोलाकमहाशयस्योदारभावो मामाचकर्ष । तदैव सायमावां परस्परं ज्ञातुं प्रवृत्तौ । जीवनस्य मुख्यविषयेषूभयोरपि समानोऽभिप्राय आसीत् । अकृत्रिमं जीवनं तस्येष्टम् ।

तस्यासीदाश्चर्यकरी शक्तिर्बुद्धिमागतस्यानुभवमार्गमानेतुम् । स्वजीवने कृतानि कतिपयपरिवर्तनानि मूलतस्त्वरितवृत्तानि बभूवुः । 'इंडियन् ओपिनियन्' पत्रिका प्रत्यहमधिकव्ययवती भवति स्म। वेस्टमहाशयादागता प्रथमविज्ञापना भयंकर्यासीत् । तेन हि लिखितं यथास्मद्व्यापारतो यथा भवानालोचयत तथा लाभो न भावीति। नष्टमपि स्यादित्यहं भीतोऽस्मि। पुस्तकानि क्रमवर्तीनि न भवन्ति। प्रत्युपलम्भनीयो ऋणशेषो महान् विद्यते। तस्य शिरोलांगूलं न जानीमः। इतस्ततो बहुशः समाकर्षणीयं भवति। परंत्वेतत्सर्वं भवन्तं न त्रासयितुमलम्। यावच्छक्यं विषयान्सम्यक् स्थापयितुं प्रयतिष्ये। लाभोऽस्तु वा न वाहं पुनः स्थास्यामीति ॥

वेस्टमहाशयो लाभो न भवतीति प्रत्यक्षीकृत्य परित्यक्तवान् भवेत्। नाहं तस्य दोषं ब्रूयाम्। वस्तुतो व्यापारो लाभकारीति प्रमाणं विना मद्वचनं श्रुत्वा मामभिशप्तुमधिकारवान् भवेत्। परंत्वयमेकमपि प्रवादशब्दं नोक्तवान्। अस्तीयं मे भावना यदेतद्विलोक्य वेस्टमहाशयो मां श्रद्धालुं मन्येत। मदनजितमहाशयस्य परिसंख्यानं परीक्षणं विना समादाय लाभकारीति वेस्टमहाशयमवोचम् ॥

इदानीमहं सिद्धमतिरस्मि। यत्सार्वजनीनः सहकारी स्वयमनिश्चितो भाषणं न कुर्यादिति। सत्यव्रतो वस्तुतो महतीं जागरूकतां भजेत। प्रमाणतः सम्यक् शोधनं विना भाषणं सत्याभासः। इदं स्वीकर्तुमहं दुःखितोऽस्मि यदेतद् ज्ञात्वापि श्रद्धालुतास्वभावो न विजितो मयेति। शक्यादधिकं कर्तुमाशैव कारणम्। इयमाशा बहुधा मम सहकारिणामेव क्लेशहेतुः। न तावन्मम ॥

वेस्टमहाशयस्य लेखं प्राप्य नातालदेशं प्रति प्रस्थितः। पोलाकमहाशयो मम केवलं विश्वासपात्रमासीत्। अग्निरथसंचालितमानारोढमग्निरथविरामस्थानं गतस्य प्रस्थानमालोक्य प्रयाणं कुर्वता भवता पुस्तकमिदं पठ्यतामित्युक्त्वा इदं ते रोचत इति प्रत्येमीत्यवदत्। तत्पुस्तकं रस्किनमहाशयरचितं 'अन्टु धिस लास्ट' इति ॥

एकदा पठितुमारब्धस्य विरम्य स्थापयितुमशक्यमासीत्। जोहनिसवर्गस्थानात् डरबनपर्यन्तं चतुर्विंशतिहोराकालमितं प्रयाणम्। वाष्पसंचालितयान तत्र सायं प्रापत्। तस्यां रात्रौ नाहं निद्रां कर्तुमशकम्। प्रस्तुतानुसारेण मम जीवनं परिवर्तयितुं निरचैषम् ॥

इदमेव प्रथमं पुस्तकं रस्किनमहाशयप्रणितं मया पठितम्। मम विद्याभ्यासदिवसेषु नियमितपुस्तकानि विना न किंचिदन्यन्मया पठितम्। यदाहं कर्मोद्युक्तस्तदा स्वल्पकालवशान्न पठितुमशकम्। पुस्तकोत्पन्नं ज्ञानं मे बहुलं नास्ति। बलान्नियमनेन न मे नष्टमासीत्। प्रत्युत परिमितपठनेन यत्पठितं तत्संपूर्णमेव जीर्णीकृतम्। पठितपुस्तकेषु तात्कालिकपरिवर्तनं सत्वरमुत्पादितवत्पुस्तकं एकं 'अन्टु धिस लास्ट' इति। तस्य भाषांतरीकरणं पश्चात्कृतं गुर्जरभाषायां सर्वोदयनाम्नि लेखने ॥

रस्किनमहाशयरचितेऽस्मिन्महाग्रन्थे ममागाधहृदयगतनिश्चयानवालोकयमिति विश्वसिमि। अतः मामाचकर्ष जीवनं च परिवर्तयामास ॥

मानुषस्य हृदये गूढं यत्समीचीनं वर्तते तदाकृष्य प्रदर्शयितुं शक्तः कविः। कवयः सर्वनैकरीत्या न प्रवर्तयन्ति। यतः प्रतिमनुष्यः समानपरिमाणेन न प्रसारितः॥

'अन्टु धिस लास्ट' अस्य योऽर्थः स इत्थमहं जानामि –

(१) प्रत्येकंमानवस्य यत्साधु तत्सर्वेषां साधु वर्तते।

(२) 'वकील' कार्यस्य मूल्यं नापितकार्यस्य मूल्यं च समानं यतः सर्वेऽपि स्वस्वकार्याज्जीवनं संपादयितुमधिकारिणः।

(३) भूमेः कर्षकस्य कर्मकारस्य च जीवनानि सुजीवनानि।

एतेषां प्रथममहमज्ञासिषम्। द्वितीयं मे बुद्धौ मन्दं मन्दं स्थितम्। तृतीयं न मे कदाप्यस्फुरत् ॥

'अन्टु धिस लास्ट' दिनवत्प्रकाशीकृतवान् यथा द्वितीयं च तृतीयं च प्रथमगतानीति। प्रत्यूषेऽहमुत्थित एतानि कारणान्यनुभवमार्गमानेतुं सज्जस्थितः॥

## एकोनविंशोऽध्यायः

# 'फीनिक्स' –आश्रमः

**वेस्टमहाशयेन** सह सर्वोऽपि विषयः संभाषितः। 'अन्टु धिस लास्ट' पुस्तकं मम मानसोपर्युत्पादितं फलमप्यवर्णयम्। 'इंडियन ओपिनियन' कृषिक्षेत्रं प्रत्यानेतव्यं तद्विषये प्रत्येकेनापि परिश्रमितव्यं पूर्वं जीवनवेतनमेव ग्रहीतव्यमवकाशे प्राप्ते मुद्रायंत्रकार्यमपि द्रष्टव्यम्। इत्येवं कर्तव्यसूचनामकरवम्। वेस्टमहाशयः संमतिं ददौ। प्रतिमासस्य प्रत्येकं वेतनं वर्णदेशाभिमानौ निरपेक्ष्य 'पौंड' त्रयमिति निश्चितम्॥

परन्तु प्रश्न एकः स्थितः। मुद्रायन्त्रे कार्यकारिणो दश वा तदधिका वा दूरक्षेत्रं गत्वा केवलभृतिमात्रेण किं संतुष्टा भविष्यन्तीति। एतदुपायस्वीकारे न योग्या ये भवन्ति तैः पूर्ववद्वेतनं गृह्णानैः क्रमशः क्रमश आश्रमस्यांगीभवनाय प्रयतितव्यम्॥

कर्तव्यसूचनामुद्दिश्य कर्मकारिभिः सह भाषणं कृतवान्। मदनजितमहाशयायेदं नारोचत। अपरिग्राह्यामेनां समेत्य स्वस्य सर्वस्वस्य विनियोगोऽपि विनष्टो भवेत्। कर्मकारिणः सर्वेऽपि पलायेरन्। 'इंडियन ओपिनियन' व्यापारो विरंस्यति। मुद्रायन्त्रं चानुपयोगात् स्थापितं भवेत्॥

मुद्रायन्त्रे कर्म कुर्वतां मध्ये मम ज्ञातीनामेकतमः छगनलाल-गांधिमहाशय एक आसीत् । कर्तव्यसूचनां वेस्टमहाशयस्य यदाकरवं तदैवास्यापि कृतवान् । भार्यापत्यानि च तस्यासन् । परन्तु शैशवात्प्रभृति मयैव शिक्षितो मद्वशे स्थितः । मयि तस्य श्रद्धा संपूर्णासीत् । अतो विवादं विनोक्तोपायस्य संमतिं दत्वाद्यावधि मत्समीपमेवास्ते । यन्त्रकारः गोविंदसामीमहाशयोऽपि मत्सूचनामंगीचकार । इतरे तु नैवोपायं स्वीचक्रुः । परन्तु मुद्रायन्त्रं यत्र गच्छेत्तत्र गन्तु संमेनिरे ॥

इमान् विषयानेतैर्मनुष्यैर्व्यवस्थापयितुं दिनद्वयादधिकं कालं नाग्रहीषम् । अतोऽहं विलम्बं विना डरबनपत्तने बाष्पसंचालितयानविरामस्थानसमीपस्थितभूमिरेकापेक्षितेति संवादपत्रेणाप्रकाशयम् । प्रतिगृह्यतामिति फीनिक्सस्योपहार आगतः । भूमिं परीक्षितुमहं वेस्टमहाशयश्च गतौ । सप्ताहाभ्यंतरे विंशति'एकर'परिमिता भूमिरस्माभिः क्रीता । तत्र समीचीनः स्वल्पो निर्झरः कतिपये नारंगचूतवृक्षाश्चासन् । तत्समीप एवाशीति 'एकर'परिमिता भूमिरासीत् । तत्र च बहवः फलवृक्षा जीर्णकुटीरश्चैक आसन् । इदं च क्रीतमस्माभिः । समग्रव्ययं एकसहस्रपौंडमितद्रव्यम् ॥

दिवंगतो रुस्तुमजीमहाशय एतादृशोद्यमेषु मम हस्तावलंबं यच्छति स्म । उपायोऽयं तस्येष्ट आसीत् । महासंभारगृहस्य प्रयुक्तपूर्वलोहफलकान् गृहनिर्माणवस्तूनि चास्मद्वशे निचिक्षेप । अस्माभिश्च कार्यमारब्धम् । कतिपयभारतीयतक्षकाः प्रस्तरन्यासकृतश्च 'बोअर' युद्धे मया सह कार्यकर्तारो मुद्रायन्त्राय मंडपिकां निर्मातुं साहाय्यमकुर्वन् । एतद्भवनं परिमाणे पंचसप्तति 'फीट' दीर्घं पंचाश 'त्फीट' विस्तीर्णमेकमासात्पूर्वमेव सज्जस्थितमभूत् । वेस्टमहाशय इतरेजनाश्च तक्षकैः शिलाशिल्पिभिश्चात्मापायेऽपि निर्भीकाः स्थिताः । निवासः शून्यस्तृणैरतिप्ररूढः सर्पैराक्रान्तो निवस्तुं भयंकर आसीत् । प्रथमतः सर्वेऽपि पटमंडपे उषिताः प्रायः सर्वाणि वस्तूनि शकटेषु 'फिनिक्स' प्रदेशं प्रति नीतानि । डरबनपत्तनात् त्रयदशक्रोशदूरे 'फीनिक्स' स्थानं बाष्पसंचालितयानविरामस्थानात् सार्धद्विक्रोशदूरे स्थितम् ॥

'मरक्युरि' मुद्रायन्त्रे 'इंडियन ओपिनियन' पत्रिकैकवारमेव बहिर्मुद्रापिताभूत् ॥

अहमिदानीं 'फीनिक्स' पत्तनं प्रति भारतदेशान्मया सह स्वादृष्टपरीक्षार्थमागतान् तत्तत्कार्येषु प्रसक्तानाक्रष्टुं प्रायतिषि । धनान्वेषणाय ते आगताः । तस्मात्ताननुनेतुं कष्टमासीत् । परंतु कतिपये संमेनिर एतेषु मगनलालगांधिमहाशयस्य नामधेयमेकं स्मरामि । अन्ये कार्याय प्रतिनिवृत्ताः मगनलालगांधिमहाशयः स्वकार्यमेकान्ततः परित्यज्य मया सह स्थितः शक्त्यात्मनिग्रहे श्रद्धायां च मम नैतिकपरीक्षासु मम पूर्वोक्तसहकारिणां मध्ये प्रथमस्तिष्ठति । स्वयंशिक्षितशिल्पविद्यस्य तस्य तन्मध्ये स्थितिर्विलक्षणा भवति ॥

एवं 'फीनिक्स'व्यवस्थापनं चतुरुत्तरेकोनसहस्रपरिमितवर्षे समारंभितम् । तत्राद्यापि 'इंडियन ओपिनियन' पत्रिका बहुक्लेशान्ते पतितापि मुद्रणं प्राप्स्यति ॥

परेत्वारंभिकक्लेशाः कृतानि परिवर्तनान्याशा नैराश्यं चान्यमध्यायमपेक्षन्ते ॥

## विंशतितमोऽध्यायः

# प्रथमा रात्रिः

'**इंडियन-ओपिनियन**' प्रथमसंख्यां 'फीनिक्सा 'श्रमाद्विनिर्गमयितुं नासीत्सुलभो विषयः। द्विप्रकारेण पूर्वविधानं नाकरिष्यं यदि प्रथमा संचिका त्यक्ता वा विलंबिता वाभविष्यत्। यन्त्रेण मुद्रायन्त्रप्रसारणं मम बुद्धिं नारूढम्। यत्र कृषिकार्यं हस्तेन क्रियते, तत्र हस्तशक्तिरेव योग्येति मे मनस्यासीत्। परन्तु मनोगतं न शक्यमित्यस्माभिस्तैलयन्त्रं प्रतिष्ठापितम्। यन्त्रहानौ यथा कयाचित् लघुक्रियया यन्त्रहानेः परिहारः स्यात्तथा भवितव्यमिति वेस्टमहाशयस्य सूचनां दत्तवान्। अतोऽसौ हस्तेन भ्रमणयोग्यं चक्रमेकं व्यधापयत्। विदूरस्थ' फीनिक्स 'सदृशस्थलस्य पत्रस्य परिमाणं दैनंदिनपत्रिकावन्न योग्यं मतमासीत्। 'फूलस्केप' परिमाणाय तथा नयनीकृतमासीद्यथा पादनोद्ययंत्रेण प्रतिलिपयो निर्मिताः स्युः॥

आदौ मुद्रापणदिवसात्पूर्वं कालातीतं सर्वे वयं कार्यप्रसक्ता अभूम। प्रत्येको युवा वृद्धो वा पत्रिकापुटीकरणेन साहाय्यं कुर्यात्। दशहोरार्धरात्र्योर्मध्ये प्रायशोऽस्मत्कार्यं समाप्तिमगमत्। परन्तु प्रथमावृत्तिः संस्मरणीया भवति। फलकास्तालयन्त्रबद्धाः स्थिताः। परन्तु यन्त्रं न चचाल। यन्त्रशिल्पिनमेकं डरबनपत्तनाद्ययमानीय यन्त्रचालनाय स्थापितवन्तः। सोऽयं वेस्टमहाशयश्च बहुक्लेशेन वृथा प्रायतिषाताम्। प्रत्येकः पुरुषोऽपि बहूत्सुक आसीत्। वेस्टमहाशयो निराशो भूत्वा नेत्राम्बुपूर्णः समागत्योवाच यथा — यन्त्रं न चलति। समये पत्रिकां संचालयितुमशक्यमिति॥

यद्येतदेवं किं कुर्मः। अलं नेत्रजलं मुक्त्वा। पुरुषप्रयत्नसाध्यं यत्किंचिदन्यदेव कुर्मः। हस्तचक्रं किल स्यात्। इति समाधानेनावोचम्॥

तेन प्रत्युक्तं यथा-कार्यकरणायास्मद्वशे जनाः कुत्र सन्ति। कार्यं कर्तुं वयं न पर्याप्ताः। प्रत्येकं चत्वार आवश्यकाः। अस्मज्जनाः सर्वेऽप्यायस्ता भवन्तीति॥

गृहनिर्माणकार्यमद्यापि न समाप्तम्। अत एव तक्षका अस्मद्वशे तिष्ठन्ति। मुद्रायन्त्रभूमितले निद्राणाः स्थिताः। इमानेवोपयोक्तुं किं न शक्यम्। सर्वां रात्रिं कार्यं कुर्मः। अयमुपायोऽस्माकं सज्जस्थितो भवति॥

तक्षकानुत्थापयितुं भीतोऽस्मि। अस्मज्जनो नूनमतीवायस्तः। उक्तं मया यथा — अयं व्यवहारो ममास्तामिति॥'

वेस्टमहाशयः प्रत्युवाच। तर्हि कार्यानुष्ठानं शक्यमेव॥

अहं तक्षकानुत्थाप्य युष्मत्सहकारित्वं प्रार्थय इत्यवोचम् । निर्बन्धो नैवापेक्षितः । तैरुक्तं यथा—आकस्मिकसंभवेऽपि यदा वयं न प्रयोजितास्तर्हि किमस्माभिः प्रयोजनम् । यूयं विश्रान्तिं गृह्णीत । चक्रं वयं चालयामः । सुलभं नस्तत्कार्यमिति । अस्मत्स्वीयजनः सज्जस्थितः ॥

वेस्टमहाशयो बहु संतुष्टोऽभूत् । कार्यं कर्तुमुपस्थितेषु स एकं मन्त्रं गातुमुपचक्रमे । तक्षकैः सहाहं भागी । अन्ये सर्वेऽपि पर्यायेण समायुक्ता बभूवुः । इत्थं प्रातः सप्तवादनपर्यन्तं गताः । अद्यापि कर्तुं बहुलमासीत् । वेस्टमहाशयस्याहमसूचयम् यथा—यंत्रशिल्पी समुत्थाय यंत्रचालनं कर्तुं पुरः प्रयततां यदि विजयं प्राप्तास्तर्हि समये समाप्तिं गमिष्याम इति ॥

वेस्टमहाशयस्तमबोधयत् । तत्क्षणमेव स यंत्रप्रकोष्ठमगमत् । आश्चर्यमाश्चर्यं तेन स्पृष्टमात्रमेव यंत्रं चचाल । सर्वमपि मुद्रायन्त्रं हर्षोद्गारेण चक्वाण । कथमिदमेवं स्यात् । रात्रावस्मत्प्रयत्ना वृथाभवन् । अद्य प्रातरिदं चलति । आदितो निर्दोषमिव । इत्यहं व्यचारयम् ॥

उक्तं वेस्टमहाशयेन वा यंत्रशिल्पिना वा यथा कष्टमिदं वक्तुम् । कानि यंत्राणि वयमिव विश्रांतिमपेक्षन्ते इति ॥

यन्त्रहानिः सर्वानस्मान्परीक्षितुमागता । सुसमये चलितुमारब्धं च । अस्मत्सत्योदारप्रयत्नानां फलमिति जाने ॥

प्रतिलिपयः सकालं प्रेषिताः । अपि च सर्वे सुखिता बभूवुः ॥

अयं प्राथमिको निर्बन्धः पत्रिकायाः क्रमिकचालनाय दृढीकरणमासीत् । 'फीनिक्स'प्रदेश आत्माधीनताया मंडलमसृजत् । आगतः स च कालो यदा यन्त्रोपयोगं मनःपूर्वकं परित्यज्य केवलं हस्तबलेन कार्यानुष्ठानं नाम । ते किल मम मानसे 'फीनिक्स'प्रदेशाय प्राप्तो नैतिकोच्छ्रायः ॥

## एकविंशोऽध्यायः

# पोलाकमहाशयो निमज्जनं प्राप्नोति

**यद्यपि** 'फीनिक्स'प्रदेशे व्यवस्थापनं मया समारब्धं तथापि तत्रात्यल्पकालमेव स्थातुमशकमिति सर्वदा विषण्णोऽस्मि । क्रमशः क्रमशो न्यायस्थानव्यवहारान्परित्यज्य 'फीनिक्स' आश्रमे हस्तबलेन जीवनं संपादयन् 'फीनिक्स'संसिद्धौ सेवानन्दं प्राप्स्यामीत्यमंसि । परन्तु ना तत्सिद्धिमगात् । अनुभवेन किल मयेदं ज्ञातं यन्मनुष्य उपायान्कल्पयति ते च भगवता पर्यस्त भवन्तीति । परन्तु तस्मिन्नेव काले यश्चांतिमः परिणामः सत्यान्वेषणं भवति नैव चिन्ता यद्यप्युपाया भग्ना भवन्तीति चरमा गतिर्न हानिकरी परन्तु चिन्तितादधिकमेव फलं प्रसूते ।

'फीनिक्स' गृहीतोऽनिरीक्षितपर्यायोऽनिरीक्षितसंभवाश्च नैव हानिकरा अभूवन्। परन्तु पूर्वनिरीक्षितादुत्तममिति वक्तुमशक्यम् ॥

हस्तप्रयासेन प्रत्येकं जीविकां लब्धुं मुद्रायन्त्रपरिसरवर्तिनीं भूमिं खण्डशो विभज्य दृष्टे प्रत्येकं 'एकर' त्रयमागतम्। तेषामेको मम भागः। एषां स्थलानामुपर्यनपेक्षायामपि लोहमयानां गृहाणां निर्माणमकार्षम्। आसीदस्मदभिलाषो यत्तृणच्छन्नानि मृत्तिकाकुटीराण्यथवा सामान्यकृषीवलोचितानीष्टकामंदिराणि निर्मातुम्। परंतु न शक्यमासीत्। तेषां व्ययोऽधिको भविष्यति। कालोऽप्यधिकोऽपेक्ष्यते स्म। प्रत्येकोऽपि यावच्छक्यं शीघ्रमेवावस्थातुमुत्सुकोऽभूत् ॥

पत्रप्रकाशकोऽद्यापि मनसुखलालनाजरमहाशय एवासीत्। नवीनोपायस्तेन नांगीकृतः। पत्रिकां डरबनपत्तनात् संचालयति स्म। तत्र 'इंडियन ओपिनियन' पत्रिकायाः शाखाकार्यालय आसीत्। यद्यपि दत्तवेतनाः मुद्राक्षरविन्यासकृतः स्थितास्तथाप्याश्रमस्य प्रत्येकः पुरुषो मुद्राक्षरस्थापनं मुद्रायन्त्रचालनक्रमेषु प्रयासं कमपि सुलभतरं शिक्षितुमुद्युक्त आसीत्। अज्ञातपूर्वकर्माणः शिक्षन्ते स्म। अहं तावदद्यपर्यन्तं मूर्ख एव स्थितः। मगनलालगांधिमहाशयो नः सर्वानप्यतिशयितवान्मुद्रायन्त्रकार्यालये यद्यपि नैव कार्यमकरोत्तथाप्यतिनिपुणो मुद्राक्षरविन्यासकारी बभूव। न केवलं शीघ्रतां प्रापदपि तु मुद्रायन्त्रस्य सर्वास्वपि शाखासु शिक्षणीयमशिक्षतेति ममातीवाश्चर्यम्। स किलात्मीयशक्तिं प्रति नैव सचेतन आसीदिति मे सार्वदिको वितर्कः ॥

वयं पुनरिदानीमवस्थिताः गृहाणि च सज्जस्थितानि तावदेव नूतननिर्मितानि। इमानि परित्यज्य जोहानिसबर्गप्रदेशं गन्तव्यमापतितम्। तत्र कार्यमवधानं विना चिरकालपर्यन्तं त्यक्त्वा स्थातव्यपरिस्थितिं न प्राप्तः ॥

जोहनिसबर्गप्रदेशं प्रतिनिवृत्तो मया कृतानि मुख्यपरिवर्तनानि पोलाकमहाशयमवोचम्। पुस्तकदानं तावत् फलकार्यासीदिति परानन्दमभजत्। सोऽप्यैच्छद्यथा नूतनकार्ये भागं वोढुं किं मे शक्यं स्यादिति। व्यवस्थापनं संयोक्ष्यसि चेच्छक्यमेवेत्यहमवोचम्। तेन प्रत्युक्तं यथा—अहं सज्जस्थितः प्रवेशनीयश्चेदिति ॥

तस्य निश्चयबुद्धिर्मां वशीचकार। मुख्याध्यक्षस्य पूर्वसूचनां दत्वा 'क्रिटिक' पत्रिकायाः समुत्तारितः क्रमेण 'फीनिक्स' स्थलं प्राप। स्वस्य लौकिकयुक्तिभिः सर्वेषां हृदयं निर्जित्य शीघ्रमेव कुटुंबजनो बभूव। स्वस्वभावस्तथा सरलो यथा 'फीनिक्स' स्थले जीवनं विचित्रं कष्टतरं वा न मेने। हंसाय जलमिव तस्मै तदरोचत। परन्त्वेनं तत्र चिराय स्थापयितुमशक्यमासीत्। रीचमहाशयः 'इंग्लेण्ड' देशे 'लॉ' अभ्यासं समापयितुं निरचैषीत्। अत्र मयैकेन कार्यालयभारं सोढुमशक्यमासीत्। पोलाकमहाशयस्याहमसूचयं यद्भवान्कार्यालये समायुक्तः प्रतिपुरुषत्वस्य योग्यो भवितुमर्हसीति। पर्यन्ते उभावपि कार्यान्निवृत्य 'फीनिक्स' स्थलेऽवस्थितौ भवतेत्यावाभ्यामालोचितम्। तत्तु तथा न संवृत्तम्। पोलाकमहाशयस्तथा श्रद्धालुस्वभावः यथा

मित्रे विश्वासं करोति चेत्तेन सह संमन्यते न तु चर्चां करोति। 'फीनिक्स' स्थलात्तेन लिखितं यथा–यद्यपि तत्रत्यजीविकया प्रीतस्तथाप्यद्यसुखितोऽस्मि। आश्रममूर्जितं कर्तुं मे आशा विद्यते। तथापि परित्यज्य कार्यालयमागन्तुमस्मि सज्जस्थितः। यदि प्रतिपुरुषीभवनेन योग्यता संपाद्यते यदि चास्मदुपायस्य सिद्धिर्भविष्यति शीघ्रतरमेवेति। तस्य पत्रं मनःपूर्वकमभिनन्दितम्। पोलाकमहाशये 'फीनिक्स' स्थलं परित्यज्य जोहानिसबर्गपत्तनमागत्य मया सह नियमपत्रं स्वहस्ताक्षरी चकार॥

तस्मिन्नेव काले 'स्कॉटलेंड' देशीयो भागवतः पोलाकमहाशयमुदाहृत्य समाहूतो लेखकविशेषो भूत्वा स्थितः। तस्य नामधेयं मेकिनटायरमहाशय इति॥

एवं 'फीनिक्स' स्थले उपायसिद्धौ प्रशंसनीयोद्देशेनागाधमगाधं गन्ता। प्रतिकूलप्रवाहे पतितः सरलजीवननामधेयेन प्रसारितया वागुरया बद्धोऽभविष्यं यदि भगवता नान्यथामतमासीत्॥

कतिपयाध्यायानतिक्रम्य वर्णयितुं प्रवर्तेय कथमहं ममोपायान् रक्षितवान् यथा केनाप्यभ्युदयितुमशक्यमिति रीत्या॥

## द्वाविंशोऽध्यायः

# देवः कं रक्षति

**इदानीं** मयाशा परित्यक्ता भारतदेशं पुनर्गन्तुम्। वर्षाभ्यन्तरे गृहं प्रत्यागमिष्यामीति भार्यायै वाङ्मयादायि। प्रतिवृत्त्याशां विना एकवर्षमत्यक्रामत्। पुत्रसमेतां तामानेतुं निरणैषम्॥

दक्षिणाफ्रिकागामिन्यां नौकायां मम तृतीयपुत्रो रामदासो नौकाध्यक्षेण सह खेलाप्रसक्तः स्वबाहुं बभंज। नौकाध्यक्षस्तं पालयति स्म। नौकावैद्योऽप्यवैक्षत। रामदासः प्रक्षेपणीसमेतस्तीरमवतीर्णः। गृहप्राप्तेरनन्तरमेव केनचिदलंकर्मीणेनैव क्षतं वस्त्रयितव्यमिति नौकावैद्येनोक्तम्। अस्मिन्नेव काले मृत्तिकाचिकित्सायां मम पूर्णश्रद्धासीत्। मम दुश्चिकित्सायां श्रद्धावन्मम व्यवहारिणश्च मृत्तिकोदकमौषधं सेवितुमवोचन्॥

रामदासस्य किमिदानीं कर्तव्यम्। स किलाष्टवर्षदेशीयः। क्षतं तवाहं चिकित्सयामि किमित्यपृच्छम्। नैव चिन्ता म इति स मन्दहासमवोचत्। तस्मिन्वयस्यात्मनः किमुत्तममिति विभावयितुं निश्चेतुं वा शक्यमासीत्। परन्तु दुश्चिकित्सायाः समुचितवैद्यचिकित्सायाश्च भेदं सम्यगजानात्। मम गृहचिकित्सायाश्च स्वभावो विदितः। मयि दृढप्रत्ययं कर्तुं श्रद्दधीत। भीतभीतः कंपमानश्च बंधनमुद्धृत्य क्षतं प्रक्षाल्य मृत्तिकालेपं दत्वा बाहुमुदबध्नम्। एवंविधं

परिवेष्टनमेकमासपर्यन्तमकारि । व्रणं संपूर्णमेव प्रशान्तम् । सामान्यरीत्या यावान्कालोऽपेक्ष्यते तावता कालेनैव प्रशाम्यतीति नौकावैद्योक्तप्रकारेणान्तरायं विना तावता कालेनैव शान्तिमागात् ॥

एतदन्यानि च परीक्षणानि गृहौषधेषु मम श्रद्धामवर्धयत् । अधिकेनात्मविश्वासेन तानि समचालयम् । मृत्तिकोदकलंघनचिकित्सां क्षतेषु ज्वरेष्वजीर्णिपांडुरोगेष्वपि चान्येष्वामयेषु विशालीकृत्य पर्यैक्षिषि । सर्वदा विजयवानभूवम् ॥

दक्षिणाफ्रिकादेशे यावान् विश्वास आसीत्तावानद्य नास्ति । अनुभवेन च प्रदर्शितं यथेमानि परीक्षणानि सुस्पष्टमपाययुक्तानीति ॥

अत्र सूचनमेषां परीक्षणानां विजयप्रतिपादनाय नाभिप्रेतम् । नास्ति मेऽधिकारः संपूर्णविजयस्य परीक्षणे । वैद्या अपि स्वपरीक्षणानां विजयस्य नाधिकुर्वते । यस्तु नूतन-परीक्षणं करोति स स्वकीयमेवारभेत । एतेन शीघ्रतरमेव सत्यं प्रकाशते । देवः सदा न्याय-वर्तिनं परीक्षकं रक्षति ॥

‘ युरोपियन ’ जनेन समीपसंपर्काभ्यासेऽपायाः प्रकृतिचिकित्सायामिव गुरुतराः स्थिताः । तेऽपायास्त्वन्यविधा आसन् । परन्तु तत्संपर्काभ्यासेऽपायविषयो न मे मनस्यस्फुरत् ॥

आगत्य मया सह स्थातुं पोलाकमहाशयो मयाहूतः । एकोदरभ्रातर इवास्माभिर्निवस्तु-मारब्धम् । पोलाकमहाशयस्य भाविनी भार्या कतिपयवर्षेभ्यो विवाहाय बद्धादरा परन्तु विवाहोऽनुकूलकालं यावद्विलम्बितम् । विवाहितजीवनाय व्यवस्थानतः पूर्वं धनसंग्रहं कर्तुमैच्छदिति मे भावना । मदपेक्षया साधुतरं रस्किनमहाशयस्य तत्त्वान्यजानात् । परन्तु पाश्चात्यसंबंधः रस्किनमहाशयस्य शिक्षणमभ्यासमार्गमानेतुं अन्तरायोऽभवत् । परन्त्वहं तेनोपन्यासमकरवं यथा युवयोरिव हृदयैक्ये सति धनविषयं पर्यालोच्य विवाहं विलंबयितुं न साधु । दारिद्र्यमन्तरायश्चेद्दरिद्रा अविवाहिता एव तिष्ठन्ति । मया सह स्थीयते त्वया । गृहव्ययो न प्रष्टव्यः । शीघ्रतरं विवाहः करणीय इति । गताध्याये उक्तरीत्या पोलाकमहाशयेन सह द्विवारं नैव भाष्यते । तत् क्षणमेव वध्वा सह पत्रव्यवहारमकरोत् । तदानीं सा ‘ इंग्लंड ’ देशे स्थिता । लेखनेनातिसंतुष्टाभवत् । कतिपयमासेषु जोहानिसबर्गपत्तनं प्राप्ता । विवाहाय व्ययो न प्रष्टव्यो वेषभूषादिकस्य विचार एव नास्ति । ताभ्यां धार्मिका विषया नापेक्षिताः । विवाहबन्धनस्य मुद्रा नापेक्षिता । वधूरत्र खिस्तानुयायिन्यासीज्जन्मनः । पोलाक यहूदीजनः । तयोः सामान्यधर्मो नैतिकः ॥

एतद्विवाहविषये विनोदांशो वक्तव्यः । ‘ युरोपियन ’ जन-विवाहेषु लेख्यारोपकः (‘ रजिस्ट्रार ’) असितवर्णयुक्तानां विवाहं नैव लेख्यप्राप्तं करोति । ‘ युरोपियन ’ मित्रं दुर्लभ इति न । परंतु पोलाकमहाशयः सूचनां न सेहे । अतो वयं त्रयो विवाहलेख्यारोपकं

प्रति गताः। कथं ज्ञायेत यत्राहं 'साधिष्ठःपुरुषः' विवाहे पक्षयोर्गौरांगाः स्युः। विचाराय प्रवृत्तः लेख्यप्राप्तं विलंबयितुमियेष। परेद्युः भानुवार आसीत्। अनन्तरदिवसो नूतनवत्सरदिनम्। अयं च सर्वविश्रामदिवसः। सुघटितविवाहदिनं निःसारव्याजवशादन्यथाकर्तुं मनुष्यमात्रस्य दुःसहमासीत्। लेख्यारोपणविधानस्याध्यक्षं प्रधानप्राड्विवाकमहमवेदिषम्। अतस्तस्य पुरस्ताद्विवाह्ययुगलेन सह गत्वा स्थितः। दृष्ट्वा जहास। लेख्यारोपकस्य पत्रमदात्। विवाहो लेख्यारूढ आसीत्॥

अद्य यावदस्माभिः सहोषिता 'युरोपियन'जनाः पूर्वमेव मम विदिताः बभूवुः। परन्त्विदानीमपूर्वज्ञातांग्लस्त्री कुटुंबे प्रविष्टाः। नवोढयुगलेन सह मनःक्लेशप्राप्तिं न स्मरामि। यद्यपि पोलाकमहाशयस्य भार्या मम प्रीतिहीने भवेतां तथापि सुव्यवस्थितसमानकुटुम्बेषु तत्संभवति। इदं तु स्मरणीयं यन्मदीयकुटुम्बं वस्तुतो विजातीयमिति। तत्र हि नानाविधस्वभावाः सर्वविधो जने निर्यन्त्रणं प्रवेशं लेभिरे। चिंत्यमाने सजातीयविजातीययोर्भेदो मनःकल्पित एव। सर्वे वयमेककुटुम्बस्थाः॥

अस्मिन्नेवाध्याये वेस्टमहाशयस्य विवाहमपि करिष्यामि। मम जीवितस्यास्यामेवावस्थायां ब्रह्मचर्यविषयका भावना न पक्वाः संजाताः। अत एवाहं सर्वान् मम ब्रह्मचारिसुहृदो विवाहितान् कर्तुमुत्साहं ग्रहीष्यामि। यदा वेस्टमहाशयो विधिवशात्स्वपितराववलोकितुं 'लाऊथ' पत्तनं प्रति यात्रां चकार तदा यदि शक्यं स्यात्तदा विवाहितः प्रत्यागम्यतामिति बुद्धिवादमदाम्। 'फीनिक्स'स्थलं सर्वसाधारणं गृहम्। सर्वे वयं कृषीवलाः संजाता इति भाविताः। अतो विवाहात्तस्य परिणामाच्च न भीताः। वेस्टमहाशयो भार्यया सहागतः। लेसेस्टरपत्तनाद्भार्या सुंदरी युवतिश्चागता। सा नापितकुटुम्बे समुत्पन्ना। तत्र शिल्पगृहे कर्म करोति स्म। सा सुंदरीति मया भाविता। तस्याः सौन्दर्यं च नैतिकं यन्मां चकर्ष। पारमार्थिकं सौन्दर्यं हृदयशुद्धौ वर्तते। वेस्टमहाशयेन सह तस्य श्वश्रूरप्यागता। सा वृद्धा स्त्री। अद्यापि जीवति। तस्या दृढव्यवसायः सानंदोत्साहवान् स्वभावो लज्जितानस्मान् चकार॥

यथा 'युरोपियन'सुहृदो विवाहे प्रोत्साहितवांस्तथा भारतीयसुहृदश्च स्वगृहेभ्यः स्वकुटुंबान्यानेतुं धैर्योक्तिभिः प्रेरितवान्। इत्थं 'फीनिक्स' ग्रामटिकाभूत्। षट् कुटुम्बान्यागत्यावस्थितानि। तत्र तानि ववृधिरे॥

त्रयोविंशोऽध्यायः

# गृहकृत्यस्यैकं दृश्यम्

दृष्टपूर्वं हि यथा गृहव्यया गुरुतराः। लघूकरणं तेषां डरबनपत्तने प्रारभत। परन्तु जोहनिसबर्गगृहे रस्किनमहाशयस्य शिक्षामनुसृत्य कठिनतरो विमर्शः प्राप्तः॥

उत्तरवादिनो ( बारिस्टर ) गृहे यावल्लाघवं शक्यं तावल्लघुत्वं निवेशितम्। कतिचिदुपस्कारान् विना वर्तितुमशक्यमासीत्। परिवर्तनमाभ्यंतरिकं न पुनर्बाह्यम्। स्वतो दैहिकप्रयासान् कर्तुमिच्छा ववृधे। अत एव पुत्रानपि तदभ्यास एव परिश्रान्तान् कर्तुमारब्धवान्॥

आपूपिकादपूपक्रयणं परित्यज्य 'क्युने' महाशयस्य निर्देशानुसारेण गृहे आकिण्वापूपः कर्तुमारब्धः। सामान्यतो यंत्रपिष्टमस्य न किंचित्प्रयोजनम्। पर्यालोचितं च यद्धस्तपिष्टेनाधिकसारल्यमारोग्यं मितव्ययश्च लभ्यन्त इति। अतो हस्तयन्त्रमेकं सप्त'पौंड'मितद्रव्येण क्रीतवान्। तदेकेनैव पुरुषेण धारयितुमशक्यं द्वाभ्यां सुकरम्। पोलाकमहाशयोऽहं च पुत्राश्च प्रायेण कुर्वन्ति स्म। मम भार्या च हस्तं योजयति स्म। तस्याः कालः पाकशालाकर्मारंभात्पूर्वम्। पोलाकमहाशयस्तस्यागमनादनन्तरमस्माभिर्मिलितः। पेषणमपत्यानां बहूपयुक्तो व्यायाम आसीत्। एतद्वान्यद्वा कर्म तदुपरि न्यस्तम्। परन्तु तेषामिदं क्रीडनमिवासीत्। आयस्ताश्चेत् परित्यज्य गन्तुं स्वतंत्राः। परंत्वपत्यान्यग्रे वक्तव्यानि न कदापि मां तत्यजुः। विलंबकारिणो न स्थिता इति न। परंतु प्रायः सर्वेऽपि सोत्साहं कर्म चक्रुः। विरलाः खलु युवानस्तत्कालं कर्मत्याजका आयासवक्तारो वा॥

गृहरक्षणाय सेवक एको नियुक्त आसीत्। कुटुंबजन इवास्माभिः सहोषितवांस्तस्य कर्मण्यपत्यानि तस्य साहाय्यं कुर्वन्ति स्म। नगरपालिकासंमार्जकः रात्रिविसृष्टान्यमेध्यानि शोधयामास। परन्तु वयं भृत्यमनुक्त्वा कुटुम्बे स्वयमेव मार्जयामासिम। अत एव मम पुत्राणां मध्ये नैकोऽपि संमार्जकस्य कर्म कर्तुं प्रतिकूल आसीत्। अपि च ते सामान्यारोग्यविषये दृढीकृतबुद्धयो बभूवुः॥

जोहानिसबर्गपत्तने नैकोऽपि रुग्णः स्थितः। आमये सति रोगिणं पुत्रा मनःपूर्वकं चिकित्सयामासुः। तेषां विद्याभ्यासविषयेऽहमुदासीनः स्थित इति नाहं ब्रूयाम्। परन्तु तत्परित्याजयितुं नासीन्मे विकल्पः। अस्ति पुत्राणां ममोपर्याक्षेपकारणम्। तत्तदवसरेषु तैरिदं व्यक्तमुक्तमेव। अहमपराधीति किंचित्संमतं मे। विद्याभ्यासः कारयितव्य इति मनस्यासीत्। मयैव विद्यां शिक्षयितुं प्रयतितम्। परन्तु प्रतिवारं यः कश्चिदप्यंतरायः स्थितः। मया सह प्रत्यहं परिक्रमाय बहिर्नीताः कार्यालयं प्रति गमनं ततः प्रतिनिवर्तनमिति कोशद्वयदूरं गतागतं कारिताः।

गृहे शिक्षणाय न कोऽपि नियुक्त आसीत् । अनेन परिक्रमणेनास्माकं व्यायामाधिक्यं जातम् । परिक्रमणेष्वनन्यभावे संभाषणेन शिक्षा प्रदीयते स्म । भारतदेशस्थितं ज्येष्ठपुत्रं हरिलालमहाशयं विनेतरे सर्वेऽपि जोहानिसबर्गपत्तनेऽनया रीत्या शिक्षिताः । तेषां विद्याभ्यासायैकहोरापर्यन्तं सावकाशो यदि क्रमेण तेषामहं संपूर्णाभ्यासं कारितवान् स्यामिति मन्ये । परन्तु पर्याप्तं शिक्षणं नैव दत्तमिति तेऽहं च विषण्णाः । ज्येष्ठपुत्रो बहुधा ममाग्रे सर्वजनप्रकाशं च मुद्रायन्त्रेष्वात्मनः क्लेशं न्यरूपयत् । अन्ये पुत्रा अपरिहार्यमकारणमित्युदारभावेन स्थिताः । एतद्विषये नाहं भग्नाशः परन्तु विषादोऽयं नाहमभ्यर्हितः पितेति । अयं मे दृढः प्रत्ययो लोकसेवार्थं बालशिक्षा परित्यक्ता यद्यपि मे श्रद्धोचिता वानुचिता वा । स्पष्टमिदं वच्मि यथा न मयोपेक्षितं तदीयचारित्र-रक्षणम् । सर्वस्यापि पितुरिदमवश्यकर्तव्यमिति मन्ये । मया प्रयत्ने कृतेऽपि पुत्राः प्रतिकूलं दृष्टाश्चेदस्ति मे दृढः प्रत्ययस्तदेतन्मम जागरूकताया अभावं दर्शयति परन्तूभयोः पित्रो-र्लोपदोषान् व्यनक्तीति ॥

अपत्यानि न केवलं पित्रोः शारीरिकलक्षणान्यपि तु तयोर्गुणानपि प्राप्नुवन्ति । इतस्ततः संदृश्या परिस्थितिरपि प्राधान्यं वहति । यन्मूलधनं प्राप्य शिशुरारभते तत्पूर्वजैरागतं मन्तव्यम् । दृष्टा हि मया शिशवो ये पैतृकरिक्थस्य दुष्टपरिणामानुत्तीर्णाः । परिशुद्धिरात्मनः सहजो गुणः ॥

पोलाकमहाशयोऽहं च शिशूनामांग्लविद्याभ्यासः स्पृहणीयः किं वा न वेति बहुवारं चर्चायां सक्तौ स्म । अस्त्ययं मे दृढः प्रत्ययो यच्छैशवात्प्रभृति शिशूनामांग्लभाषायां वक्तुं चिंत-यितुं च ये शिक्षयन्ति ते शिशुभ्यो देशाय च द्रुह्यन्ति । राष्ट्रस्य दैविकं सार्वजनीनं दायमपहरन्ति । तावन्मात्रेण लोकसेवार्थमयोग्यान्कुर्वन्ति । एतान्निश्चयान्मनसि कृत्वा मम शिशुभिः सह सर्वदा गुजरातीभाषायां व्यवहरामि । इदं पोलाकमहाशयस्य नेष्टमासीत् । तेन चिन्तितं तेषां भाविजीवनमेव दूष्यत इति । यावन्तावस्य प्रीतिविश्वासौ तावद्भ्यां तेनोक्तं यथा – आंग्लभाषा सार्वलौकिकी वाणी बाल्यात्प्रभृत्यभ्यस्ताश्चेदन्येषामुपरि जीवनमार्गे उत्कर्षं प्राप्नुयुः शिशवः । मां समाधातुमशक्तोऽभूत् । न स्मरामि यन्मम भावस्य याथार्थ्यं तदेव स्वीचकाराथवा केवलहठवा-दीति मां तत्याजेति । एतद्विंशतिवत्सरेभ्यः पूर्वं संबभूव । मम निश्चया अनुभवेन साकं दृढतराः संजाताः । यद्यपि मे पुत्रा विद्याभ्यासं विना नष्टमापन्नास्तथापि तैः प्राप्तं मातृभाषाया ज्ञानं तेषां देशस्य च लाभाय बभूव । नो चेद्विदेशीया अभविष्यन् । ते स्वभावतो भाषाद्वयवेदिन आंग्लसुहृदां प्रात्याहिकसंपर्कादांग्लभाषां भाषमाणा लिखन्तश्च । अपि च देश आंग्लभाषा मुख्यव्यावहारिकभाषासीत् । इति हि द्वैभाषिका आसन् ॥

चतुर्विंशोऽध्यायः

# 'झूलु' प्रकृतिक्षोभः

जोहानिसबर्गपत्तनेऽवस्थितोऽहमिति यदा मया चिन्तितं तदा नाहमवस्थितो वस्तुतः।

शांतोऽहमिदानीं निश्वसिमीति यदा मया चिन्तितं तदानीमेवानिरीक्षितो विषयः कोऽपि समुपस्थितः। समाचारपत्रिकासु नातालदेशे झूलुजनः राजद्रोहे समुद्युक्त इति वार्तागता। झूलुजनस्योपरि न मया मत्सरो व्यूढः। नापायस्तैः कृत भारतीयजनस्योपरि। राजद्रोहविषयेऽपि संशयित आसम्। परन्तु 'ब्रिटिश' सार्वभौमता जगतो योगक्षेमायेति मे विश्वास आसीत्। स्वामिभक्तिश्च तस्यानिष्टमपि भावयितुमवारयत्। राजद्रोहवार्ता तस्मान्मम निर्णयं नान्यथा कर्तुमशकत्। नातालपत्तनेऽयाचितरक्षात्वलमेकमासीत्। अधिकं जनं सैन्ये प्रवेशयितुं स्वातंत्र्यमभूत्। मया क्वचित् पठितं यदेतद्वलमेव राजद्रोहं शमयितुं संचलनप्रवृत्तमिति ॥

मम नातालपत्तनस्य समीपसंपर्कत्वात्तन्नगरस्याहं नागरिक इति चिन्तितम्। देशस्याधिपतिं प्रत्यलेखिषम् यद् भारतीयसेनादलमेकं रचयितुं सज्जस्थितोऽस्यावश्यके सतीति। अस्त्विति तत्क्षणमेव प्रत्युक्तिरागता। तादृशः शीघ्रोऽङ्गीकारो मया न निरीक्षितः। अदृष्टवशात्पत्रस्य लेखनात्पूर्वमेवावश्यकानि सर्वाणि संविधानानि मया कृतानि। मम प्रतिज्ञा स्वीकृता चेज्जोहानिसबर्गमंदिरं विभिद्यतामिति निश्चितोऽहम्। पोलाकमहाशयस्य गृहमल्पतरं कल्पितम्। मम भार्यया तु 'फीनिक्स' स्थलं गत्वा स्थातव्यम्। अस्य निश्चयस्य तदीया पूर्णा संगतिः प्राप्ता। एतादृशसंदर्भेषु सा न कदापि प्रतिकूला स्थिता। देशाधिपतेः प्रतिवचनं यदा लब्धं तदा गृहपतेरेकमासात्पूर्वं गृहत्यागसूचनां कृत्वा कतिपयसंभारान् 'फीनिक्स' स्थलं प्रति प्राहैषम्। कतिपये पोलाकवशे मुक्ताः ॥

डरबनपत्तनं गत्वा पुरुषानन्विष्टवान्। महद्दलं नावश्यकमासीत्। वयं चतुर्विंशतिस्तेषां मां मिलित्वा चत्वारो गुजरातीजना अन्ये दक्षिणभारतादागताः कर्मबद्धाः पुरुषाः स्वतन्त्र 'पठाण'-जनमेकं विना ॥

मम गौरवस्थानं दत्वा कर्म च सुकरं कर्तुं वर्तमानसमयानुसारेण प्रधानवैद्याधिकारी 'सार्जंट मेजर' पदे मां नियुक्तवान्। ततस्त्रीन् पुरुषानहं 'सार्जंट' पदेऽन्यं 'कोरपोरल' पदे च वरयित्वा नियुज्य स्थितः। आधिशक्यात्सैन्यवेषाश्च प्राप्ताः। अस्मद्दलं प्रायः षट्सप्ताहपर्यन्तं सेवायां स्थितम्। राजद्रोहस्थानं गते मयि राजद्रोहनामपि समाधातुं न किंचिन्मया तत्र दृष्टम्। पर्यवस्थापि नासीत्। कश्चि'झूलु'प्रधानपुरुषः स्वजनस्योपरिन्यस्तं नूतनं राजकरं न प्रदेयमित्याज्ञाप्य तत्संग्रहणार्थमागतं सैनिकाध्यक्षं प्राहरत्। जनक्षोभः संजातः। अयमेव राजद्रोह

इति महत्तरीकृतः। मम हृदयं 'झूलु'जनेष्वासीत्। अग्रस्थानमागतेऽस्मत् प्रधानकार्यं क्षतस्य 'झूलु'जनस्य परिपोषणमिति श्रुत्वा सानंदोऽभवम्। वैद्योऽधिकार्यस्मान्प्राशंसयत्। तेनोक्तं यथा—गौरांगाः क्षत'झूलु'जनस्य मनःपूर्वकं धात्रीकर्म न चक्रुः। क्षतानि पूतानि भवन्ति। किंकर्तव्यमिति न जानामीति। अस्मदागमनेन देवप्रेरितेनेव संतुष्टा निष्कपटाश्च ते जनाः। स प्रादादस्माकं बंधनानि निर्विषीकरणानि। ततः कल्पितवैद्यशालां प्रत्यस्मान्निनाय। अस्मान् दृष्ट्वा 'झुलु'जनः संतुष्टः। गौरांगयोधा अस्मभ्यः पृथक् स्थिताः। छिद्रेभ्यो नः सूक्ष्ममीक्षन्ते स्म। अपि च क्षतानीमान्यदृष्टानि कुरुध्वमिति प्रेरयितुं प्रयेतिरे। अस्मान्निरवधानान् दृष्ट्वा कुपिताः 'झुलु'जनस्योपर्यश्राव्यदुर्वचनानि ब्रुवन्ति स्म॥

क्रमशः क्रमश एतैर्योधैः सह समीपतरसंपर्कं प्राप्तः। परव्यापारात्ते दूरे तस्थुः। शासकाधिकारिणां मध्ये 'कर्नल स्पार्क्स' 'कर्नल वायली' च षण्णवत्युत्तराष्टादशसाहस्रमिते वत्सरे मामेकान्ततः प्रत्यवस्थितौ। मम मनोलक्ष्यं दृष्ट्वाश्चर्यभरितौ विशेषतो मामाहूय कृतज्ञतामूचतुः। 'जनरल मेकेन्झी'महाशयेन सह ते परिचयमकारयन्। इमे सैनिकयोधा इति मा वाचकश्चिन्तयतु। 'कर्नल वायली'महाशयो डरबनपत्तने प्रसिद्धो न्यायवादी। 'कर्नल स्पार्क्स'महाशयः डरबनपुर एव मांसविक्रयिण आपणस्य स्वामी। 'जनरल मेकेन्झी'महाशयः नातालदेशस्य प्रसिद्धः कृषीवलः। एते सर्वे महाशयाः स्वयमागता युद्धे शिक्षणमनुभवं च प्राप्ताः॥

अस्मद्वशे स्थिताः क्षता जना न किल युद्धे परिक्षतास्तेषां कतिपये संशयेन गृहीता बन्द्यः। 'जनरल वान' कशाघातेन दंडितवान्। तेन घातेन व्रणाः समुत्पादिताः। एतेऽलक्षिताः पूयन्ते स्म। इतरे 'झूलु' मित्राणि यद्यप्येत आत्मानं शत्रोर्विरोधयितुं दत्तचिह्ना योधैः प्रमादेन गुलिकप्रक्षेपेण ताडिताः॥

एतत् कर्म विना गौरांगयोधेभ्यो निर्दिष्टौषधानि मिश्रीकृत्य कल्पितानि प्रदेयानि मया। 'डाक्टर बूथ'महाशयस्याल्पा या वैद्यशाला तस्यामेकवर्षपर्यन्तं शिक्षणं ममासीत्। अत एतत्सुकरमासीत्। अनेन कार्येण अनेकै'र्युरोपियन'जनैः सह समीपसंपर्को मे जातः॥

शीघ्रसंचारिगणस्य वयं बद्धाः। यत्र कुत्राप्यपायः सूचितश्चेत्तत्र चलितव्यमित्याज्ञास्मद्गणस्य। एतत्प्रायोऽश्वारूढं पादातिकं सैन्यम्। यावदस्मच्छिबिरं चलितुमारब्धं तावदस्मद्वाहूपरि रोगिप्रवहणं निक्षिप्य पादक्रमेणानुसर्तव्यमासीत्। द्वित्रवारं प्रत्यहं विंशतिक्रोशदूरं गन्तव्यमापतितम्। देवस्य सत्कर्म कर्तव्यमिति कृतज्ञोऽस्मि यत्र कुत्रापि गतः। प्रमादतः परिक्षतान् 'झूलु'स्नेहशीलान् रोगिप्रवहणेन स्कंधोपरि वहद्भिर्धात्रीव तानुपचरद्भिर्दैवकार्यं निर्व्यूढम्॥

## पंचविंशोऽध्यायः

# हृदयमन्थनम्

'झूलु'राजद्रोहो नवनवानुभवपूर्णश्चिन्तयितुं बहुलावकाशं ददौ। युद्धस्य भयकंपितानि यथा राजद्रोहः स्पष्टतयानीतवांस्तथा 'बोअर'युद्धेऽपि न संबभूव। एतन्न युद्धमपि तु मनुष्याणां मृगया। न केवलमयं ममाभिप्रायः परं कृतभाषणानामांग्लजनानामपि। प्रातः प्रातः योधानां गुलिकाप्रक्षेपणे महाशब्दं शब्दस्फोटसदृशं निर्दोषग्रामटिकासु शृण्वतां तन्मध्ये निवासो दुष्करः। परंतु मया तिक्तगुलिका निगीर्णा। यतो मम गणस्य कार्यं परिक्षत'झूलु' जनानां परिपोषणम्। अस्मदवधानं विना 'झूलु'जनश्चिन्तायुक्तोऽभविष्यत्। अत एतत्कार्यं मनःसुखमकरोत्॥

मनुष्यं चिन्ताकुलं कर्तुमन्यद्बहुलमासीत्। अल्पैर्जनैरुषितो देशविभागोऽयमासीत्। शैलकंदरेषु अव्याकृता अनागरिका 'झूलु'जनस्य विरलाः ग्रामटिकाः स्थिताः। परिक्षतैः सह वा विना वा चलन् बहुवारमगाधविचारसागरे मग्नोऽभूवम्॥

ब्रह्मचर्यं प्रत्यालोचयं तस्य पूर्वपरिणामैः सह। मम निर्णया अगाधमूलं भेजिरे। सहकारिभिश्च चर्चामकरवम्। तदा मया न ज्ञातं कियदावश्यकं तद्भवतीति। स्पष्टमहमद्राक्षं सर्वात्मना लोकसेवां कर्तुमुत्सुकस्तद्विना नैव स्थातुमर्हति। मया क्रियमाणसेवार्थमवकाशोऽधिकाधिकमावश्यकः। अपि च कुटुंबजीवनस्य जननपोषणकृत्ययोः प्रसक्तश्चेदहं कार्यनिर्वाहशून्यो भविष्यामीति मे प्रतिभाति॥

एकेनैव शब्देन वच्मि यथा योगी च भोगी चोभयमेकदा भवितुमशक्यमिति। वर्तमानावसरे दृष्टान्तो यदि मे भार्या शिशु-प्रसविनी स्यात्तदा कलहप्रसक्तिर्नाभविष्यत्। ब्रह्मचर्यानुष्ठानं विना कुटुंबसेवा लोकसेवा च परस्परविरुद्धौ भवतः। ब्रह्मचर्येण सह तौ समग्रसंगतौ स्तः॥

इत्थं चिंतयभन्तिमव्रतग्रहणाय किंचिदसहमान आसम्। व्रतस्य भाविनी दृष्टिः कमप्यानंदं मानसमानिनाय। भावनापि स्वतंत्ररूपं प्राप। ततोऽपरिमितमार्गान् सेवाया उद्घाटयत्॥

एवं यदाहं गाढविचारे परिश्रमे च निरतोऽभवं तदा प्रवृत्तिरागता राजद्रोहनिग्रहकार्यं समीपप्रायमिति। वयं सर्वे विमोचिता भविष्याम इति। एकद्विदिवसान्तरे विमोचनमागतं वयं च सर्वे गृहाणि प्राप्ताः॥

किंचित्कालानन्तरं देशाधिपतेः सकाशाल्लेख आगतः। रोगिप्रवहणस्य सेवया तव कृतज्ञोऽस्मीति॥

'फीनिक्स' स्थलं प्राप्तः छगनलाल-मगनलाल-वेस्टमहाशयैरितरैश्च ब्रह्मचर्यविषये प्रस्तावमकरवम्। मनोगतं तेभ्योऽरोचत। व्रतग्रहणस्यावश्यकतामङ्गीचक्रुः। परन्तु कार्यस्य दुष्करत्वमूचुः। कतिपये धैर्येण कर्तुमुद्युक्ताः। कतिपयेऽहं जाने जयं प्राप्ताः॥

अहमपि निमग्नः यावज्जीवं ब्रह्मचर्यं साधयितुम्। अङ्गीकर्तव्यं यत्तदैवाहमस्य प्रमाणमपरिमितत्वं च नाज्ञासिषम्। तत्कष्टान्येतस्मिन्नपि दिवसे द्रष्टुं व्यक्तीभवन्ति। व्रतस्य प्राधान्यमधिकाधिकं मनसि रूढं भवति। ब्रह्मचर्यं विना जीवनं निःसारं पशुप्रायं च प्रतिभाति। पशुः स्वभावत आत्मनिग्रहं न जानाति। मनुष्योऽस्ति मनुष्यो यतः स निग्रहे शक्तः। अस्मद्धर्मशास्त्रेषु ब्रह्मचर्यस्तुतेरतिशयोक्तिरित्यभावत्तदिदानीं मे दिने दिने स्पष्टतरं प्रतिभाति सर्वमत्यंतयुक्तमनुभवसमर्थितं चेति॥

प्रत्यक्षीकृतं मया यदाश्चर्यकरप्रभावशालि ब्रह्मचर्यं न खलु सुलभो विषयो न चेदं शरीरमात्रसंबंधि। शारीरनिग्रहेणारंभः परन्तु न तत्रैवान्तः। सिद्धिर्यदा भवेत्तदापवित्रा मानसीवृत्तिरपि न विद्यते। पारमार्थिको ब्रह्मचारी स्वप्नेऽपि न शारीरकामं शमयितुमिच्छति। एतदवस्थाप्राप्तिपर्यंतं गन्तव्या पदवी महती वर्तते॥

मम शारीरब्रह्मचर्यमपि दुष्करं भवति। अस्मिन् दिने सुरक्षितोऽस्मीत्यहं ब्रूयाम्। अपि त्वद्यापि मनो जेतव्यम्। मनोजय आवश्यकः। निश्चयबुद्धिः प्रयत्नो वा नास्तीति न। अनिष्टा मनोवृत्तयः कथंकारं गुप्तरीत्याक्रमणं कुर्वन्तीति चिन्तनीयम्। एतेन पृथक् पृथक् सर्वं द्रष्टव्यम्। सिद्धैः ऋषिभिश्च स्वानुभवो निर्दिष्टः। परन्तु कैर्निश्चितः सार्वजनीने निर्देशो व्यधायि। सिद्धिर्निर्दोषता वा दैवानुग्रहेणायाति। भगवदन्वेषकैर्मन्त्रा निर्दिष्टाः। यथा रामायणं तपःशुद्धिसमन्वितम्। भगवतः शरणागतिं विना मानसोपरि संपूर्णस्वातंत्र्यमशक्यम्। अयं धर्मशास्त्रस्य महानुपदेशः। ब्रह्मचर्यसाधनाय प्रयतमानोऽस्य याथार्थ्यं प्रतिक्षणं भावयामि। परन्तु क्लेशपरिश्रमाणां चरितस्य भागोऽग्रेतमाध्यायेषु निरूप्यते। वर्तमानमध्यायं कथं मया कार्यमारब्धमित्युक्त्वा समापयामि। उत्साहस्य प्रथमभागे सुकरं कर्तुमित्यचिन्तयम्। जीवनरीतौ प्रथमं परिवर्तनं भार्यया सहैकशय्याशयनमथवा तया सहैकान्तस्थितिः॥

एवं ब्रह्मचर्यमेकोनविंशसाहस्रमिताब्दे यद्वा तद्वानुष्ठीयमानं षडधिकैकोनविंशतिमिते वत्सरे व्रतनियमेन बद्धोऽभूवम्॥

षड्विंशोऽध्यायः

# सत्याग्रहोदयः

जोहानिसबर्गपत्तने तथावृत्ता घटना यथेयं मे आत्मशुद्धिः सत्याग्रहात्पूर्वतराभूत्। इदानीं किल दृश्यते महात्मनो जीवनस्य मुख्यसंभवा ब्रह्मचर्यव्रतावसाना रहो मां तदर्थं मार्गे नयन्ति स्म । सत्याग्रहाख्यतत्त्वं नाम कल्पनात्पूर्वमेवागतम् । यदा तत्प्रसूतं तदाहं किमेतदिति वक्तुं नाशकम्। गुजरातीभाषायामांग्लवाण्यात्मकं 'सहनप्रतीकार' (Passive Resistance) इति वर्णयितुं रूढिरागता। 'सहनप्रतीकार' इत्यतीव संकुचितोऽर्थः। निर्बलानां शस्त्रं द्वेषनामांकितं पर्यन्ते बलात्काररूपेण प्रादुर्भावः। अहमेतानि वचनानि शङ्कमानः शृण्वन् स्थितः। भारतीयसंचालनं प्रति व्याख्येयमासीत् । स्पष्टं भारतीयजनैः स्वकलहस्य नामधेयमेकं कल्पनीयम् ॥

परंत्वहं नवनामधेयं नाज्ञासिषम्। अत एव 'इंडियन ओपिनियन'पत्रिकाद्वारा पारितोषिकमुत्तमसूचकाय देयं कृतवान्। मगनलालगांधिमहाशयेन शब्दः कल्पितः सदाग्रह इति। सतः सत्यस्य आग्रहः स्थैर्यमिति। अयं पारितोषिकं प्राप। इत्यपि स्पष्टतरं कर्तुं स एव शब्दः सत्याग्रह इति परिवर्तितः। गुजरातीभाषायां सत्याग्रह इति कलहस्य रूढिरागता ॥

एतत्कलहस्य चरितं व्यवहारयोग्यसर्वोद्देशेन दक्षिणाफ्रिकादेशे मम जीवनशेषस्यापि च सत्यशोधनस्य चरितं भवति। 'येरवडा'कारागृहे एतच्चरितस्य भूयान् भागो लिखितः। ततो मम विमोचनानन्तरं समाप्तिं गमिता। नवजीवनपत्रिकायां प्रकाशितं तदनन्तरं पुस्तकरूपेण संचालितम्। वालजीगोविंदजीदेसाईमहाशयः 'करन्ट थोट'पत्रिकायै आंग्लभाषायां परिवर्तयति। परंत्वहमांग्लभाषानुवादं पुस्तकरूपेण प्रकाशयितुं शीघ्रमेव प्रयतमानोऽस्मि। एतेन दक्षिणाफ्रिकादेशे मम मुख्यपरीक्षणान्यपेक्षायां सत्यां परिचाययेयुः। दक्षिणाफ्रिकायां मम सत्याग्रहचरितं ये न पठितवन्तस्तैरिदमवलोकनीयमिति बोधयामि। तत्र मया यदुपन्यस्तं तन्न पुनर्वर्णयामि। परन्त्वग्रे तु न कतिपयाध्यायेषु दक्षिणाफ्रिकायां निर्वृत्तात्मीयसंगतीस्तस्मिंश्चरितेन निरूपिता उदाहरिष्यामि। एतेषु कृतेषु भारतदेशे विहितान् सूचयितुं तत्क्षणमेव प्रवर्तिष्ये। यः कालक्रमानुसारमेतानि परीक्षणानि पर्यालोचयितुमिच्छति स दक्षिणाफ्रिका-सत्याग्रहचरितमग्रे स्थापयितुमर्हति ॥

सप्तविंशतितमोऽध्यायः

# आहारनियमान् प्रकृत्याधिकपरीक्षणानि

कायेन मनसा वाचा ब्रह्मचर्यं पालयितुमुत्सुकोऽभवम् । अधिकमपि कालं सत्याग्रहस्य विनियोज्य शौचमभ्यस्यन् तद्योग्यमात्मानं कर्तुमुत्सुकश्च संवृत्तः । अतोऽहमाहारविषयेऽन्यानि परिवर्तनानि कृत्वा भूयसे निग्रहायात्मानं लक्ष्यीकर्तुं मार्गमानीतः । पूर्वपरिवर्तनानामुद्देश आरोग्यविषयकः । परन्तु नवपरीक्षणानि धर्मविषयकाणि ॥

मम जीवने उपवास आहारनियमश्च मुख्यतमौ । विषयवासना सामान्यतो जिह्वाचापल्येन सह वर्तते । मम विषये तथैवासीत् । मया बहवः क्लेशा अनुभूताः कामस्य निग्रहे । अद्यापि संपूर्णविजयस्तयोः कृत इति नैव ब्रूयाम् । अहं गुरुतरो भोक्तेति मया चिन्तितम् । यत्सुहृदो मे नियन्त्रणमिति मन्यन्ते तथा तन्मे न प्रतिभाति । यद्यहं नियन्त्रणामेवं नाभ्यस्तवांस्तदा पशुभ्योऽप्यधस्तात्पतित्वाचिरान्मे गतिं प्राप्तवान् स्याम् । परन्तु मम लोपानहमज्ञासिषम् । अत एव तान्निष्कासयितुं महाप्रयत्नानकार्षम् । सफला हि प्रयत्ना यत एतान् वत्सरान् शरीरं रक्षित्वा मम कार्यभागं निवेशितवान् । मम दौर्बल्यं विजानन् समानशीलानां संपर्कमकस्मात्प्राप्तः फलाहारमेकादश्यां ग्रहीतुमथवौपवस्तुमारब्धः । अपि च जन्माष्टमीमितरकार्यविरामदिवसांश्चाचरितुमुपक्रान्तवान् ॥

फलाहारः समारब्धः । फलाहारधान्याहारयोर्मध्ये वरयितुं न किंचिदस्ति । आस्वादश्च पूर्वापरयोः शक्य इति लक्ष्यते । इतोऽप्याधिकमभ्यस्तं चेदुपवासोऽथवा कार्यविरामदिवसेषु दिनस्यैकमेव भोजनमित्यनयोर्महत्तरं प्राधान्यमदाम् । प्रायश्चित्तादिकस्य समयो यदि स्यात्तदापि संतुष्योपवासमकरवम् ॥

किन्तु लक्षितं मया शरीरं साफल्येन शोधितम् । अत आहार आस्वादनीयो जातः । बुभुक्षा च तीव्रतरा संवृत्ता । मनसि ममास्फुरद्यदुपवास नियन्त्रणेव समर्थमेकं शस्त्रं क्रियेत । अनेके तादृशा अनुभवा ममेतरेषां च दीयेरन् । अस्याश्चर्यकरविषयस्य प्रामाण्येन मम शरीरं संस्कर्तुं शिक्षयितुं च ममेष्टमासीत् । किन्त्वधुना मम प्रधानोद्देशो नियन्त्रणां साधयितुं तालु च विजेतुम् । वृतो मया प्रथममेक आहारस्ततश्चान्य इति । तस्मिंन्नेव काले द्रव्यमियदिति निश्चितम् । किन्त्वास्वादो मामनुसृतः । एकं परित्यज्य द्वितीयं गृहीतं चेदेतच्चरमं नूतनं महत्तरं चास्वादमदात्पूर्वगृहीतात् ॥

एतानि परीक्षणानि कुर्वाणस्य कतिपयसहचारिण आसन् । एषां मुख्यतमो हरमानकेलनवेकमहाशयः । दक्षिणाफ्रिकायां सत्याग्रहचरित एनं सुहृदमुद्दिश्यालेखिषम् । पुनः सा वार्ता मा भूत् । केलनवेकमहाशयः सर्वदोपवासाहारनियमेषु वा मत्सहचार्यासीत् । सत्याग्रहकलहो

यदा तीव्रतरोऽभूत्तदाहं तस्य स्थल एव तेनैव सहोषितवान्। आवामाहारविषये चर्चामकरवाव। पूर्वस्मात्परमेव हर्षप्रदमासीत्। एषः स्वभावः संभाषणं च तेषु दिवसेषु रमणीयमासीत्। इदमनुचितमिति मम नास्फुरत्। अनुभवेन शिक्षितोऽहं यदाहारास्वादस्य भाषणं वितथामिति। ताल्लुप्रहर्षाय न भुंजीताहारम्। किन्तु शरीरपोषणाय। यथा प्रतीन्द्रियं शरीरं परिसेवते शरीरादात्मानं तस्य विशिष्टास्वादोऽदर्शनं याति। तदेव स्वभावोद्दिष्टप्रकारेण व्यापृणोति ॥

परीक्षणानां संख्यात्यल्पा महदपि महत्तरं बलिदानं स्वभावेनैकतामधिगन्तुम्। परन्तु दौर्भाग्यात्प्रवाहोऽपरदिशा बलवच्चलति। न लज्जिताः स्मो यज्जीवितत्रातं विनश्वरदेहमलंकर्तुं तस्य सत्तां कतिपयपलायमानक्षणपर्यन्तं स्थापयितुं चोपहारीकुर्मः। फलितं च यदात्मानं शरीरं च विनाशयामः। एकरोगचिकित्सायां शतमन्यानुत्थापयामः। विषयानन्दानुभवाय प्रयतमानाः पर्यन्तेऽनुभवशक्तिमपि विनाशयिष्यामः। एतत्सर्वं प्रत्यक्षमेव चलति। द्रष्टुमनिच्छन्तोऽन्धा भवन्ति ॥

तेषामुद्देशं तान्प्रतिनीतवतो भावनाप्रवाहानेवमुदाहृत्येदानीमाहारनियमान्वर्णयितुमिच्छामि ॥

## अष्टाविंशोऽध्यायः

# कस्तुरबाईमहाशयाया धैर्यम्

**मम** भार्या त्रिवारं गुरुतरव्याधिपीडिता मरणं निस्तीर्णा। गृहौषधैरेव स्वस्था बभूव। प्रथमतो रोगाक्रमणकाले सत्याग्रहश्चलति स्माथवारभमाण आसीत्। वारंवारं सा रक्तं स्रवति स्म। कश्चिद्वैद्यसुहृदस्त्रचिकित्सा कर्तव्येत्याह। सा किंचिदिव विकल्प्य संमतिं ददौ। सातीव कृशतराभूत्। वैद्यो निश्चैतन्यकरमौषधं विना शस्त्रोपचारं कृतवान्। कार्यं सिद्धमासीत्। किन्तु महती वेदना तयानुभूता। धैर्येणोत्तीर्णेत्याश्चर्यमेव। वैद्यस्तस्य भार्या च धात्री कर्मकर्त्र्यतीवसावधानावास्ताम्। एतत् डरबनपत्तने चलितम्। वैद्यो मे जोहानिसबर्गनगरं प्रतिगन्तुमनुज्ञां ददौ। रोगिविषये मा किंचिदुत्सुको भूरित्यब्रवीत् ॥

कतिपयदिनेषु गतेषु लेखः प्राप्तो यथा कस्तुरबाईमहाशयाधिकरोगिणी भवति। शय्यायामुपवेष्टुमपि कष्टतरं जातम्। एकवारमचेतनासीदिति। वैद्यस्य विदितं मम संमतिं विना मद्यं मांसं वा न देयमिति। जोहानिसबर्गगृहं प्रत्यागतं ध्वनियंत्रद्वारा गोमांसं चापानं प्रदातुमनुज्ञा दीयतामिति। अनुज्ञां न दद्याम्। परन्तु सा चेतनावस्थायामस्ति चेदपि च ग्रहीतुं संमन्यते यदि सा यथेष्टं कुर्यात्। उक्तं च वैद्येन यथा रोगिण इच्छां न ग्रहीष्यामि। ममेच्छानुसारमाहारं दातुं नानुजानीया यदि तव भार्याजीवितस्य नाहं प्रतिवचनकारी भवेयमिति।

डरबनपत्तनस्य शकटीमारुह्य तद्दिनमेव वैद्यमद्राक्षम्। स च मंदं वृत्तांतमवादीद्यथा ध्वनियंत्रद्वारा पृच्छापूर्वमेव तव भार्यायै गोमांसं चापानं च दत्तवानहमिति। पश्य वैद्य एषा किल वंचना। वंचना नैवायाति रोगिण आहारनिर्देशे। वस्तुतो वयं वैद्या रोगिणो बंधून् वा वंचयितुमेवास्मद्धर्मं मन्यामहे यदि ते न प्राणरक्षणं कुर्मः—इति निश्चितमुवाच वैद्यः॥

अहमतीवदुःखितोऽपि असंतप्त इवासम्। वैद्यः सत्पुरुषो मम साक्षान्मित्रम्। स तद्भार्या च कृतज्ञोऽहमस्मीति जानीतः। तयोर्ध्वनितार्थं सोढुमहं नैव सज्जस्थितोऽभवम्॥

वैद्य किमिदानीं कर्तुमिच्छसि। मम भार्यायाः मांसं गोमांसं वा दातुमनुज्ञां नैव दास्यामि मरणे संभवत्यपि। यदि सा ग्रहीतुमिच्छेत्तथास्तु॥

तव तत्त्वज्ञानं तवैवाभिनंदनीयम्। यावत्ते भार्या मम चिकित्साधीना भवति तावन्ममेष्टानुसारेण दद्याम्। इदं भवते न रोचते यदि सान्यत्र नीयतामिति वक्तुं विषीदामि। मम गृहे तन्मरणं न द्रष्टुमिच्छामि॥

एतत्क्षणमेवान्यत्र नीयतामिति तवेच्छा॥

अन्यत्र गच्छत्विति कदाहमवोचम्? स्वतंत्रां परिस्थितिमिच्छामि। तथा करोषि चेन्मम भार्याहं च तस्या यावच्छक्यं तावत्कुर्मः। अपि च तस्या विकृते सर्वचिन्तां परित्यज्य पुनः निवर्तितुमर्हसि। एतावन्मात्रं यदि त्वं न जानासि तर्हि मम स्थानादन्यत्र तां नयेति वक्तुं बलात्कृती भविष्यामि॥

मम पुत्राणामेको मया सह स्थित इति चिन्तयामि। स्वस्य मात्रे गोमांसं चापानं च न दातव्यमिति सोऽपि संमेने। ततोऽहं कस्तूरबाईमहाशयामेतदपृच्छम्। अस्मिन्विषये समालोचयितुं सातीव निर्बलासीत्। परन्तु तथा कर्तुं मम धर्म इत्यचिन्तयम्। मम वैद्यस्य च मध्ये यद्वृत्तं तदहमवोचम्। सा किल निश्चितं प्रत्याह यथा नाहं गोमांसं चापानं ग्रहीष्यामि। मनुष्यजन्मलाभ एव विरलः। अहं ते बाहुमध्ये म्रियेय न पुनर्देहं गर्ह्यद्रव्यस्पर्शेन मलिनीकुर्याम्। तया सह वादप्रवादमकरवम्। अहमनुसर्तव्य इति नास्ति निर्बन्धः। हिन्दुसुहृदः परिचिताश्च यथाविकल्पं विना मांसं मद्यं वौषधरूपेण गृह्णन्तीत्यवोचम्। परन्तु सा कठोरनिश्चयैतत्क्षणमेवान्यत्र नीयतामित्यवोचत्॥

अहं संतुष्टः। किंचित् क्षोभं विना तामन्यत्र नेतुं निरचैषम्। तस्या निश्चयं वैद्यस्य न्यवेदयम्। स तु क्रुद्धो विचुक्रोश यथा कीदृशः कठिनहृदयो भवांस्तस्या वर्तमानदशायामिदं वक्तुं कुतस्त्वं न लज्जितः। वदामि त्वां तव भार्यान्यत्र नेतुमनर्हास्यामवस्थायाम्। किंचिच्चलनमपि सोढुमशक्ता सा। मार्गे यद्यपि म्रियेत तदपि नाश्चर्यम्। यदि त्वं निश्चितोऽसि तथास्तु। गोमांसं चापानं च न दास्यसि। अहं चैकमपि दिनं तां निवेशयितुं मम गृहपटलादधस्तात् संमन्येय॥

अतस्तत्क्षणमेव स्थलं परित्यक्तुं निरचैषम्। तदा शीकरं वर्षति स्म। शकटीस्थानं स्वल्पदूरे स्थितम्। डरबनपत्तना 'फीनिक्स'स्थलं गन्तव्यम्। ततोऽवस्थानं : सार्धक्रोशदूर गामिना मार्गेण प्राप्यते। असंशयमेव महान्तमपायं ग्रहीतुं मार्गः स्थितः। देवे विश्वस्य कार्यमकार्षम्। 'फीनिक्स'स्थलं प्रति संदेशमग्रे प्राहैषम्। वेस्टमहाशयेऽस्मान् शकटीस्थाने प्रेक्षेत वस्तुभिरेतैरेकादोलिकैकं शीसकमुष्णदुग्धान्वितं उष्णोदकस्यैकं चेति। कस्तुरबाईमहाशयां दोलायां वोढुं षट्पुरुषाश्च। एतान् गृहीत्वागन्तव्यमिति संदिष्टम्। अनन्तरं लोहमार्गेण तां नेतुं मनुष्यवाह्यशकटीमेकां प्राप्य तां तादृग् भयंकरदशास्थायिनीं तदंतर्निवेश्य प्रयातोऽहम्॥

कस्तूरबाईमहाशया प्रत्याश्वासं नापैक्षत। प्रत्युत मामानंदयत् कथयन्ती न किंचिन्मम संभवति मा क्लेशितो भवेति॥

बहुदिवसेभ्यो युक्तपोषणं विना सा चर्मास्थिमात्रशेषा स्थिता। अवस्थानस्य वेदिका सुमहत्यासीत्। मनुष्ययानमंतर्नेतुमशक्यम्। अतो लोहमार्गशकटीप्राप्तेः पूर्वं स्वल्पदूरं क्रमितुमावश्यकमासीत्। अतोऽहं बाहुभ्यां तामुद्धृत्य शकटीप्रकोष्ठे न्यवेशयम्। 'फीनिक्स'-स्थलात् दोलायां वाह्यमाना तत्र जलचिकित्सया शनैः शनैर्बलं प्राप॥

'फीनिक्स'स्थलप्राप्तेर्द्वित्रिदिनेभ्यः पश्चादेकः स्वाम्यस्मत्स्थानमागतः। वैद्यस्य बुद्धिवादो निश्चयेन तिरस्कृत इति श्रुत्वा कारुण्येनास्माभिः प्रमाणीकरणार्थमागतः। मम द्वितीयतृतीयपुत्रौ मणिलाल–रामदासौ स्वामी यदागतस्तदा तत्रोपस्थितौ। मांसाहारः शास्त्रानुज्ञात इति मनुस्मृतिस्तेन प्रमाणीकृता। मम भार्याया अग्रे वादकरणं मे नारोचत। प्रथमादहं तूष्णीमासम्। मनुस्मृतेः श्लोकानहमज्ञासिषम्। ते मम निर्णयाय नावश्यका आसन्। विदितं च मे केचिदिमान् श्लोकान् प्रक्षिप्तान् मेनिरे। तदभावेऽपि धर्मशास्त्रगणनां विना शाकाहारविषये मम स्वतंत्राभिप्रायः स्थितः। कस्तूरबाईमहाशयायाः श्रद्धा निष्कंपाभूत्। तस्याः शास्त्रीयमूलग्रन्था न विदिताः। परन्तु सांप्रदायिकधर्मः पूर्विकाणां पर्याप्त आसीत्। शिशवः पितुः श्रद्धानुसारिणः। अतः स्वामिनः संभाषा तैर्मन्दीकृता। परन्तु कस्तूरबाईमहाशया संलापस्य पर्यन्तं तत्क्षणमेवागमयत्। उक्तं तया यथा भवद्भिर्यद्वा तद्वा समुच्यताम्। नाहं गोमांस–चापानेन स्वस्था भवितुमिच्छामि। इतोऽप्यधिकं न वयं क्लेशनीयाः। मम पत्या शिशुभिः सह चर्चा क्रियतां यद्यपेक्ष्यते। मम मानसं निश्चितं भवतीति॥

एकोनत्रिंशोऽध्यायः

# आंतर्वेश्मिकः सत्याग्रहः

कारागृहस्य मम प्रथमानुभवोऽष्टोत्तरेकोनविंशतिसहस्रमिते संवत्सर आसीत् । बंदिभिरनुभूयमानान्यनुशासनानि ब्रह्मचारिणात्मनिग्रहमिच्छता बुद्धिपूर्वकं परिपालनीयानि । उदाह्रियते यथा — अंतिमं भोजनं सूर्यास्तमयात्पूर्वमेवेति । भारतीयाफ्रिकाबंदयः 'चा' अथवा 'काफी' नामकं पानं ग्रहीतुं नानुज्ञाताः । यदीष्टं तदा पक्काहारस्य लवणं मिश्रयेत् । परंतु तात्वा स्वरोचमानं न किंचिद् गृह्णीयात् । कारागृहस्य वैद्योऽधिकारी शाकचूर्णं पृष्टोऽपि चाहारे पच्यमाने लवणनिक्षेपं च । स उवाच यथा — तालुसमारोचनाय यूयमत्र न स्थ । आरोग्यदृष्ट्या शाकचूर्णं नावश्यकं भवति । पचनात्पूर्वं वा पश्चाद्वा लवणमिश्रणे नास्ति व्यत्यास इति ॥

पर्यन्ते इमानि नियन्त्रणानि रूपांतरं गतानि । तच्च न गुरुतरक्लेशं विना । परन्तु द्वावपि पथ्यकरौ । बहिष्टो निवेशिताः संयमाः कदाचित् सिध्यन्ति । परन्तु यदा स्वयं निवेशितास्तदा हितकरा भवन्ति । कारागारन्मुक्तेनैव मया द्वावपि नियमावंगीकृतौ । तदा यावच्छक्यमासीत् तावत् कृत्वा पश्चाच्चापानं परित्यक्तम् । सूर्यास्तमयात्पूर्वमेव भोजनं समाप्तम् । उभयमपीदानीं करणे प्रयत्नं नापेक्षते ॥

लवणं च सर्वात्मना परित्यक्तुं समय आगतः । इदं नियन्त्रणं दशवर्षपर्यन्तं निर्वाहयम् । पठितं मया कतिपयपुस्तकेषु यल्लवणं नावश्यक आहारो मनुष्यस्य प्रत्युत लवणं विना भोजनमारोग्यकरं लवणशून्याहारेण ब्रह्मचारिणः प्रयोजनमस्तीति । पठितं च दुर्बलशरीराः सातीलकं परिहरेदिति । तस्मिन्मेऽतीवाभिरुचिरासीत् ॥

शास्त्रोपचारादनन्तरं स्वल्पकालं स्वस्था कस्तूरबाईमहाशया पुनः रक्तं स्रावयितुं प्रवृत्ता । रोगश्च कठोरः प्रत्यभात् । जलचिकित्सा निष्प्रयोजनासीत् । ममौषधेषु तस्या नैव श्रद्धा । प्रतिकूला नासीत् । बहिष्ठं साहाय्यं नापैक्षत । यदा मम सर्वौषधानि निष्प्रयोजनानि तदा तामपृच्छं लवणं सातीलकं च परित्यजेति । न सा संमन्यते स्म यद्यपि प्रमाणग्रन्थानुदाहृत्य प्रार्थितापि । भवानप्येतानि वस्तूनि न परित्यजेत् परित्यजेति बोधितोऽपि । इत्थमवोचत् । अहं पीडितः संतुष्टश्च । संतुष्टस्तु प्राप्तोऽस्म्यवसरमिदानीं तदुपरि प्रीतिवर्षं वर्षयितुमिति । उक्तं च मया त्वं प्रमादिनी । यद्यहमस्वस्थो यदि च वैद्य इमानि वस्तूनि त्यजेति ब्रूयाद् विनाविकल्पमहं तथा कुर्याम् । किन्तु वैद्यवचनं विना एकवर्षपर्यन्तं लवणं सातीलकं चाहं परित्यजामि यदि त्वं करोषि वा न वा ॥

सा सरौक्ष्यं कंपिता महता रोगेणोच्चैर्जुघोष । यथा मां क्षन्तुमर्हसि । विदितोऽसि मम । तथापि त्वां क्रोधयुक्तमकरवम् । एतानि वस्तूनि परित्यक्तुं प्रतिजाने । किन्तु व्रतं परिह्रियताम् । इदं ममोपर्यतिकठोरं पततीति ॥

इमानि वस्तूनि परिहर्तुमत्यन्तमुत्तमं तव । एतद्विना त्वं स्वस्थतरा भवसीति न मे ईष-दपि संशयः । अलाघवेन गृहीतव्रतं न निवर्तयामि । एतन्ममोपकरोति । नियन्त्रणायामपि यत्प्रेरयति तत्पथ्यकरं मनुष्याणाम् । मामेकमभ्यनुजानीष्व । तदेतन्मे परीक्षणं भवति । तव निश्चयं निर्वाहयितुं तव नैतिकाधिकारः ॥

अतो मां परित्यक्तवस्तुकं च तया यथा त्वं हठवादी कस्यापि त्वं न शृणोषीत्युक्त्वा नेत्रांबूनि ववर्ष ॥

इदमेकं सत्याग्रहमिति गणयितुमिच्छामि । तदेतदतिमधुरं जीवनस्मरणमिति मन्ये ॥

तदनन्तरं कस्तूरबाईमहाशया अतिशीघ्रं स्वस्थीभवितुं प्रवृत्ता । लवणशून्यसातीलका-हारस्वीकारेण वा तदाहारेऽन्यपरिवर्तनेन वा जीवितनियमानुष्ठाने मम जागरेण वा कार्योत्पन्नमनःप्रहर्षेण वा यद्येवं तदा कियत् प्रमाणमिति वक्तुं न शक्यते । सा शीघ्रमेव स्वस्था बभूव । रक्तस्रावो निवृत्तः । दुश्चिकित्सकोऽहमिति प्रथा वृद्धिमगात् ॥

नूतनप्रत्यादेशैरहं स्वस्थतरो जातः । परित्यक्तवस्तूनि न मया पुनरपेक्षितानि । एकं वर्षं वेगतो जगाम । ममेन्द्रियाणि निर्जितान्यासन् । आत्मनियन्त्रणायेच्छा वृद्धिमागता । वस्तुभ्यः परिवर्जनमहाभारतदेशस्य पुनः प्राप्तिपर्यन्तमकार्षम् । एकवारमेव द्वेऽपि वस्तुनी चतुर्दशैकोनविंशतितमे वत्सरे 'लंडन'पत्तने ग्रहीतुं प्रावर्ते । परन्तु तत्समयः कथमुभयमपि प्रतिग्रहीतुमित्यग्रेतनाध्याये वर्णयिष्यामि ॥

मम सहकारिणामनेकजनोपरि लवणशून्यसातीलकाहारपरीक्षणं दक्षिणाफ्रिकादेशे कृतम् । वैद्यप्रपंचे एतदाहारं प्रत्यभिप्रायद्वयं स्यात् । परन्तु नैतिकरूपेणाहं प्रतिजाने आत्मापह्नव आत्मनेऽत्यन्तोत्तमं भवति । आत्मनियन्त्रकस्याहार आनंदासक्तमनुष्ये भिन्नः । यथा तस्य जीवनमार्गा भिन्नाः स्युः । ब्रह्मचर्यव्रताभिलाषुक आनंदजीवितमार्गानवलम्ब्य स्वकीयोद्देशमेव निहन्ति ॥

त्रिंशोऽध्यायः

## आत्मनियन्त्रणामुद्दिश्य

**उक्तं** मया व्यतीताध्याये यथा कस्तूरबाईमहाशयाया रुग्णता ममाहारपरिवर्तनं कर्तुं कारणभूतमासीत् । एतदुत्तरकालेऽधिकपरिवर्तनानि ब्रह्मचर्यालंबनार्थं प्रवेशितानि ॥

दुग्धपरित्यागः प्रथमस्तावदेषाम् । रायचंदभाईमहोदयेन प्रथमं मया शिक्षितं यद्दुग्धं पाशवं काममुद्दीपयतीति । शाकाहारग्रन्था भावनामिमां पर्यपुष्यन् । यावन्मया ब्रह्मचर्यव्रतं न गृहीतं तावद्दुग्धलोपो मे न संमतः । पूर्वमेव मे विदितं यद्दुग्धं शरीरपोषणाय नावश्यकमिति । परन्तु त्यक्तुमिदं दुष्करमासीत् । यथा यथा क्षीरपरिवर्जनावश्यकतात्मनिग्रहार्थे वर्धमानाभवत्तदानीं 'कलकत्ता'पत्तनात्किंचिद् वाङ्मयं मया लब्धं यत्र वर्णितमासीद्यथा गावो महिष्यश्च पालकैर्यातनां गमिताः । मदुपर्येतेनाश्चर्यकरो भावः संजातः । कॅलनबॅकमहाशयेन सह चर्चामकरवम् ॥

यद्यप्यहं दक्षिणाफ्रिकासत्याग्रहचरिते कॅलनबॅकमहाशयस्य परिचयं वाचकानां कारितवान् व्यतीताध्याये चायं तथा सूचितस्तथापि किंचिदधिकं तद्विषये वक्तव्यमिति चिन्तयामि । आवयोरकस्मात्समागम आसीत् । 'खान'महाशयस्य सुहृदेषः । खान-महाशयोऽस्मिन्नंतर्गतां वैराग्यवृत्तिमवालोकयत । अतो मे तत्परिचयमकारयत् ॥

यदाहं तमपश्यं तदा तस्याभोगासक्तिमतिव्ययं च दृष्ट्वाश्चर्यचकितोऽभवम् । परन्त्वावयोः प्राथमिकसमागमे धर्मविषयकान्सूक्ष्मतरान् प्रश्नानपृच्छत् । आपाततो गौतमबुद्धस्य वैराग्यविषय उक्तः । आवयोः परिचयः सुहृत्त्वेन परिपाकमाप । यथैकप्रकारेण व्यचिन्तयाव । यानि परिवर्तनानि मम जीविते कृतानि तानि स्वयं करिष्यामीति जातनिश्चयोऽभूत् ॥

तस्मिन्काले स एककः प्रतिमासं द्वादशशतानि रूप्यकाणां व्ययं गृहभाटकं विना करोति स्म । इदानीं तथा सरलजीवने प्रवृत्तो यथा प्रतिमासं विंशत्युत्तरशतमेव व्यय आसीत् । मम गृहसंभेदान्मम कारागृहात्प्रथममोचनाच्चानन्तरमावां सहोषितौ । सहनिवासश्च क्लिष्टतर आसीत् । दुग्धविषयकचर्चास्मिन्काले प्रवृत्ता। कॅलनबॅकमहाशयेनोक्तं यथा वयं दुग्धस्य सदा हिंसाकरं रूपमुद्दिश्य संभाषामहे । कुतस्तन्न परित्यजामः । नावश्यकं हि तदिति । इमां सूचनामाकर्ण्य यथासुखमाश्चर्यभरितोऽभवम् । एतत्क्षणमेव दुग्धं त्यक्तव्यमिति प्रतिज्ञामकरवाव । इदं द्वादशोत्तरैकोनविंशतिशताब्दमिते वत्सरे 'टॉलस्टॉय फार्म'स्थले संवृत्तम् ॥

एतत्प्रत्याख्यानं मां तर्पयितुं न पर्याप्तमासीत् । एतदनन्तरं फलाहारेण जीवितुं निरचैषम् । तदप्यत्यल्पमूल्यवत् । अतिदरिद्रजन इव वर्तितुं ममाशासीत् ॥

फलाहारोऽनूकूल आसीत् । न हि पाचनं संभवति । एतावान्मम प्रायश आहारो यथा—भूचणकः कदली द्राक्षा नारंगो जितवृक्षतैलमिति ॥

ब्रह्मचर्योत्सुकानां संदेश एको वक्तव्यः । यद्यपि ब्रह्मचर्याहारयोः समीपतरसंबन्धो मयोक्तस्तथापि मन एव प्रधानम् । मम मानसमशुद्धमिति ज्ञात्वा स्थितवत उपवासेन नैव शुद्धिः । आहारे विपरिणामा नैव फलिष्यन्ति । मनसः कामुकत्वं निमीलयितुं न शक्यम् । आत्मपरीक्षणं देवस्य शरणागतिरन्ते च प्रसादः । एतान्यावश्यकानि । मनःशरीरयोः समीपसंबन्धो वर्तते । कामुकं मनो भोजनविशेषं सौरस्यं च कामयते । ईदृक्परिणामं निवारयितुं नियन्त्रणान्युपवासाश्चावश्यकानीति प्रतिभाति । कामुकं मन इंद्रियनिग्रहं विना तेषां दासो भवति । अतः शरीरं सर्वदानुद्दीपकमाहारं नित्यनैमित्तिकोपवासं चापेक्षते ॥

ये त्वाहारनियंत्रणान्युपवासं च लघूकुर्वन्ति ते प्रमाद्यन्ति । सर्वस्वं ये विनियुंजते तथैव भ्रान्ता भवन्ति । अनुभवेन शिक्षितोऽस्मि यद्येषां मनांस्यात्मनिग्रहाय प्रयतन्ते तेषामाहारनियमा उपवासश्चातीव साहाय्यकराः । वस्तुतस्तेषां साहाय्यं विना कामुकत्वं संपूर्णतया मनसो निष्कासयितुं न शक्यम् ॥

## एकत्रिंशोऽध्यायः

# उपवासः

यदा मया दुग्धं धान्यं च परित्यज्य फलाहारः प्रारब्ध आत्मनिग्रहाय लंघनमारब्धम् । अस्मिन् कॅलनबॅकमहाशयो मया समायुक्तः । यदा कदा मयारोग्यकारणेनोपवासः क्रियते स्म । आत्मनिग्रहायोपवास आवश्यक इति कुतश्चित्सुहृदः सकाशान्मया शिक्षितम् ॥

अहं वैष्णवकुटुंबे कष्टव्रताचरणं कुर्वन्त्या मातुः प्रसूत भारतदेश एकादशीतरोपवासाश्च मया क्रियन्ते स्म । परन्तु तन्मातरमनुकर्तुं पितॄन् संतोषयितुं च ॥

तदानीमुपवासप्रयोजनं न मे विदितम् । न च मे श्रद्धाभूत् । परन्तु निरूपितपूर्वः सुहृदाचरति स्म प्रयोजनं च लभते स्म । इति दृष्ट्या ब्रह्मचर्यालंबनाय तमनुकृत्यैकादश्या-मुपवासमकरवम् । सामान्यतो हिन्दुजनः फलं च दुग्धं चोपवासदिन आहरति स्म । परन्तु तादृगुपवासो मया प्रत्यहं क्रियते स्म । अत इदानीमुदकमात्रं गृहीत्वा मया संपूर्णोपवासः स्वीकृतः ॥

यदा परीक्षणमिदमारब्धं तदा हिन्दुश्रावणमास मुसलमानमहाशयानां 'रमझान'-मासश्चैकदिने प्रवृत्तौ । गांधिकौटुंबिका वैष्णवव्रतं शैवव्रतं चोभयमाचरन्ति स्म । शिवदेवस्थानं विष्णुदेवस्थानं चोभयं गम्यते स्म । कुटुंबस्यैके जनाः श्रावणमासे प्रदोषमाचरन्ति स्म (सायंपर्यन्तमुपवासं) । अहमपि तथा कर्तुं प्रवृत्तः ॥

इमानि मुख्यपरीक्षणानि यदा टॉलस्टॉयस्थले स्थितास्तदा स्वीकृतानि कर्तुम्। तत्र हि कॅलनबॅकमहाशयेन मया च कतिपयसत्याग्रहिकुटुंबैः सह स्थीयते स्म। तरुणाः शिशवश्च तत्रासन्। तत्पार्श्वे एका पाठशाला स्थिता। तन्मध्ये चतुःपंच मुसलमानमहाशया आसन्। तेषां स्वधर्माचरणं कर्तुं मया प्रोत्साह्यन्ते स्म। प्रत्यहं 'निमाज' इति दैनिकप्रार्थनां ते कारयन्ति स्म। 'क्रिस्टियनपारसी'जनोऽप्यासीत्। स किल स्वकीयधर्माचरणं करोति स्म। तथा कारयितुं मम कर्तव्यमित्यहं व्यभावयम्॥

अतोऽस्मिन्मासे 'रमझान'मासप्रयुक्तोपवासं कर्तुं 'मुसल्मान'तरुणानुदसाह्यम्। मया हि निश्चितं प्रदोषमाचरितुम्। 'हिन्दुपारसीक्रिस्टियन' तरुणानेकत्र मिलितुं प्रोत्साह्या-त्मसंयमनायेदमुत्तममित्यवोचम्। बहवः कृषीवला ममोक्तिमग्रहीषुः। 'हिन्दुपारसी'तरुणा 'मुसल्मान'जनं प्रत्येकविषये न प्रत्याचख्युः। तन्नावश्यकमासीत्। 'मुसल्मान'तरुणैः सायंकालपर्यन्तं प्रातर्भोजनाय प्रतीक्षितव्यम्। इतरे तु तथा न चक्रुः। 'मुसलमान'मित्रेभ्यः स्वाद्वन्नं सज्जीकृत्य परिवेषयितुमनुकूलास्तस्थुः। हिन्दुजना अन्ये च तरुणाः 'मुसल्मान'सहवासं न चक्रुः। परेद्युः प्रातरुदयात्पूर्वं चरमभोजनं चक्रुः। वस्तुतो मुसलमानजनं विनेतरे सर्वेऽपि उदकमाजहुः। एषां परीक्षणानां फलितं यथोपवासप्रभावं सर्वे जज्ञिरे। तन्मध्ये तेजोमय प्रखर ऐक्यताभावोऽरोहत्॥

टॉल्स्टॉयफार्मस्थले वयं सर्वेऽपि शाकाहारिण आसन्। कृतज्ञोऽस्मि यत् सर्वे सज्जस्थिता मम चेतो मानयितुम्। 'मुसल्मान'तरुणानां 'रमझान' काले भोजनलोपः संवृत्तः स्यात्। परन्तु न कोऽपि यथावृत्तमवोचत्। सन्तुष्टास्तु ते। तेषां शाकाहारः सुस्वाद आसीत्। हिन्दुतरुणा बहुवारमाश्रमे सारल्यानुसारेण शाकाहारविशिष्टान्नं तेभ्यश्चक्रुः॥

उपवासविषयके एतदध्यायमध्ये मनःपूर्वकमेव विषयान्तरं गृहीतवान्। यत इमे हर्षप्रदाः स्मृतयो न क्वापि देया भवन्ति सारल्यं विना मदीयगुणो वर्णितः। यथा मम सहकारिणो यत्र क्वाप्युत्तमे कर्मणि मया सह निवेशयामि। उपवासस्तेषां नवोऽभवत्। परन्तु कृतज्ञोऽस्मि प्रदोष 'रमझान'उपवासद्वारा सुलभोऽभूत्। आत्मनिग्रहस्य साधनत्वेनो-पवासप्रीतिमुत्पादयितुम्॥

एवमात्मनिग्रहावकाश आश्रमस्थल उदयं प्राप। आश्रमसहवासिनः सर्वेऽप्यर्धपूर्णो-पवासेऽस्मान्समायोक्तुमारभन्त। कियद्दूरं तेषां हृदयमात्मनिग्रहोऽस्पृशदिति वक्तुमशक्यम्। स्वीकरोम्यहं यदेतेन शरीरं नैतिकं मम बहुप्रयोजनमासीदिति। उपवास इतरनियमैश्च सर्वेषामेकमेव फलं न प्रसूत इत्याख्येयम्॥

उपवास आत्मनिग्रहार्थं क्रियते चेत् पाशवं काममवरोद्धुं साहाय्यं करोति। केचिदस्माकं सुहृदः पाशवं कामं जिह्वाचापल्यं चोपवासानामनन्तरफलत्वेन समुद्दीपितं पश्यन्ति। उपवासो

व्यर्थो यद्यात्मनिग्रहाभिलाषेण निरन्तरं संयुक्तो न स्यात्। भगवद्गीताया द्वितीयाध्यायगत-श्लोकोऽयमस्मिन्विषये लेखनीयः—

विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥

उपवासस्तत्सदृशो नियमश्चात्मनिग्रहस्यैकं साधनम्। किन्तु सर्वमिदं न भवति। शरीरोपवासः मानसिकौपवासेन संयुक्तो यदि न स्यात् कापट्यं विपत्तिश्च जायेते ॥

## द्वात्रिंशोऽध्यायः

# पाठशालाध्यापकः

एष्वध्यायेष्वहं दक्षिणाफ्रिकासत्याग्रहचरिते क्षेपेणाख्यातान् विषयान् वर्णयामीति वाचकः स्मर्तुमर्हति। यद्येवं कुर्यात्तदार्वाचीनाध्यायानां संबंधं सौकर्येण जानीयात्। यदाश्रमोभिवर्ध-मान आसीत्तदा बालानां बालिकानां च विद्याभ्यासाय नियमोपकल्पनमावश्यकमासीत्। तन्मध्ये 'हिन्दु मुसलमान पारसी क्रिस्टियन'बालका अपि च कतिपये हिन्दुबालिकाश्च स्थिता-स्तेषामध्यापिकान् योजयितुं नावश्यकमित्यहमालोचयम्। वस्तुतस्तत्साध्यमपि नासीत्। यतो योग्या भारतीयाध्यापका विरलाः। उपलभ्याश्चेत् सार्धदशक्रोशदूरवर्तिस्थानात् स्वल्पवेतनाय गन्तुं नैव सज्जस्थिता भवन्ति। न चास्मान् धनप्रवाह आगच्छेत्। आश्रमस्य बहिर्भागादध्यापकानानेतुं नाहमावश्यकं मन्ये। वर्तमानविद्याभ्यासरीत्यां न मे विश्वासः। अनुभवपरीक्षणाभ्यां यथार्थमार्गं मदीयमधिगन्तुं मनस्यासीत्। एतावन्मे विदितमासीद्यद्यथार्थ-विद्याभ्यासः पितृभिरेवानुकूलसंदर्भेषु कर्तव्य इति। तदानीं बहिष्टं साहाय्यमत्यल्पमेव ग्रहीतव्यम्। टॉलस्टॉय-आश्रम एकं कुटुंबकं यस्याहमेव पिता। तरुणानां शिक्षणाय यथाशक्यं प्रतिवक्तृता वोढव्या ॥

भावना तावान्निर्दोषासीत्। शैशवात्प्रभृति सर्वे तरुणजना मया सह न स्थिताः। भिन्नभिन्नप्रकारेण परिवेष्टनैश्च शिक्षिताः। तेषां धार्मिकं मतं नैकमासीत्। तरुणजनानां न्यायतः किं कुर्यां तदीयपितृस्थानमंशीकृत्यापि ॥

मानसशिक्षणस्यैव प्रथमं स्थानमदाम्। चारित्रनिर्माणं मुख्यतमम्। नैतिकशिक्षा सर्वेषामेकरूपेण दातुं शक्यते यद्यपि तेषां वयांसि शिक्षणं च भिद्यन्ते। चतुर्विंशतिहोराकालं तन्मध्ये निवासमंगीकृत्य पितेव स्थितोऽस्मि। चारित्रनिर्माणमेव तेषां विद्याभ्यासाय समुचितोऽस्ति भारः। अस्ति भारः स्थैर्येण प्रतिष्ठापितो यदि शिशवः स्वयमेव वा सुहृदां साहाय्येन चान्यत्सर्वं शिक्षेरन् ॥

परन्त्वधिकं शास्त्रिकशिक्षणस्यावश्यकता विज्ञाता। अतः 'कॅलनबॅक–प्रागजी देसाई' इत्यनयोः साहाय्येन कतिपयश्रेणीरुदघाटयम्। शरीरपोषणं च मया न विस्मृतम्। इदं ते प्रात्यहिककार्यक्रमेणैव प्रापुः। यत आश्रमे सेवका नासन्। वाचनात्प्रभृति संमार्जनपर्यन्तं सर्वमपि कार्यं सहवासिभिरेव कृतम्। बहवः फलवृक्षाः प्रतीक्षणीया आसन्। कॅलनबॅकमहाशयस्योद्यानकर्मणि प्रीतिरासीत्। अस्मिन्कर्मणि तस्यानुभवो 'गव्हरमेन्ट' आदर्शोद्याने तेन प्राप्तः। सर्वेषामपि कर्तव्यमिदं पाकशालायामुद्युक्तादन्यिना यदुद्यानकर्मेति। शिशूनामधिकतमो भागः प्राप्तः। स च गर्तोत्खातनं दारुपातनं भारोद्धरणं च। एतेन तेषां पर्याप्तो व्यायाम आसीत्। अतस्तेषां कर्मणि तेषां संतोष आसीत्। अतस्तेषां कार्यान्तरं वेलाश्च नावश्यकान्यासन्। नूनं तेषां कतिपये कदाचित्ते सर्वेऽप्यस्वास्थ्यव्याजेन वान्यथा वा छलेन कर्तव्यतां तत्यजुः। कदाचिन्मया तेषां कुचेष्टा उपेक्षिताः। परन्तु बहुधाहं जागरूकः। कठोरत्वं न तेषामिष्टमासीत्। परन्तु प्रतिकर्तुमुद्यतान्न स्मरामि। यदाहं कठोरस्तदा कार्यं क्रीडाकर्तुं न योग्यमित्यपन्यस्य तानाश्वासयाम। परिज्ञानं स्वल्पकालजीवि भवति। यतोऽपरे क्षणे कार्यं परित्यज्य खेलितुं गच्छन्ति। वयं कथंचित्प्रवृत्ताः। ते समीचीनं शरीरं प्रापुः। आश्रमे रुग्णता विरला। शोभनो वातः समीचीनं जलं प्राप्तकालं भोजनमिमानि प्रतिवक्तव्यानि भवन्ति॥

कार्योद्योगशिक्षाविषये किंचिद्वक्तव्यम्। तरुणानां प्रत्येकमुपयुक्तहस्तनिर्वाह्यकार्यमध्यापयितुं ममेच्छासीत्। एतदुद्देशेन कॅलनबॅकमहाशयः 'टेपिस्ट'मठं गत्वोपानत्करणं शिक्षित्वा प्रत्यागतः। तस्मादिदमहमशिक्षयम्। तद्ग्रहीतुं ये सज्जस्थितास्तेषां शिल्पमशिक्षयम्। कॅलनबॅकमहाशयस्य वर्धकि व्यापारानुभव आसीत्। अन्यः कोऽपि सहवासी तदजानात्। अत एकां स्वल्पश्रेणीं तक्षणं शिल्पेऽकार्षम्। पाचनं सर्वे तरुणा अवेदिषुः॥

सर्वमेतत्तेषां नूतनमासीत्। क्वचिद्दिवस एते विषयाः शिक्षितव्या इति स्वप्नेऽपि तेषां न विदितम्। यतो दक्षिणाफ्रिकायां भारतीयशिशुभिर्गृहीतमेकमेव शिक्षणं 'र'कारत्रयवेद्यं–रीडिंग-राइटिंग एरिथमेटिक–पठनं, लेखनं अंकगणितं च–॥

'टॉलस्टॉया'श्रमे शासनं कृतं यदध्यापका न चक्रुस्तत्र तरुणाः कर्तुं न वक्तव्या अतो यत्किंचित्कार्यं कर्तुमुक्ताश्चेदेकोऽध्यापकः सर्वदा सहकारी। तैः सह कार्यकर्ता च स्थितः। अतस्तरुणैर्यत्किंचिच्छिक्षितं संतोषेण शिक्षितं स्यात्॥

अग्रेतनाध्यायेषु शास्त्रिकशिक्षा सौशील्यसंपादनं च निरूप्येते॥

## त्रयस्त्रिंशोऽध्यायः

# अक्षरशिक्षणम्

दृष्टं हि व्यतीताध्याये व्यायामशिक्षार्थं 'टॉलस्टॉय'आश्रमे किं कृतमिति। प्रसंगाद्व्यवसायार्थं च। यद्यप्येतन्न तृप्तिकरं तथापि विनयशीलमित्येव वक्तव्यम्॥

शास्त्रिकशिक्षणं तावदधिककष्टतरो विषयः। उपपत्तिर्वावश्यकसंभारा वा मन्निकटे नासन्। प्रस्तुतविषयावगाहनाय पर्याप्तः कालोऽपि नासीत्। मया क्रियमाणं शारीरं कर्म दिनान्ते मां साकल्येन परिक्षीणावस्थमकरोत्। अतो यदा विश्रांतिरपेक्षिता तदानीमेव छात्रश्रेणीपुरस्तादवस्थिता। यदा श्रेण्यामविकलतेजसा स्थातव्यं तदा महता कष्टेन सूपविष्टेन वर्तनीयम्। प्रत्यहं प्रातःकाल आश्रमस्य कर्मणां कृते गृहकृत्यार्थं च विनियुज्यते स्म। अतः शालाकालो मध्याह्नभोजनानन्तरं निर्देष्टव्यमासीत्। न काचिदन्या वेला पाठशालाकार्ययोग्या। शास्त्रिकशिक्षणार्थं त्रयः पर्यायाः परिक्लृप्ताः। 'हिन्दी' 'तामिल' 'गुजराती' 'उर्दू' एतत्सर्वं शिक्षितम्। बालकानां मातृभाषया शिक्षणं कृतम्। आंग्लभाषापि शिक्षिता। गुजराती-हिन्दुबालकेभ्यः किंचित् संस्कृतं सर्वेभ्यः शिशुभ्यो मूलिकं चरितं भूगोलवर्णनं गणितं च शिक्षयितुमावश्यकमासीत्। 'तामिल-उर्दू'भाषे शिक्षयितुं मया समारंभः कृतः। अल्पं तामिलभाषाज्ञानं समुद्रयात्रासु कारागृहे च मया लब्धम्। 'पोप'महाशयस्य दिव्यं तामिलहस्तपुस्तकमतिक्रम्य न मया चलितम्। उर्दूलेखनस्य ज्ञानं एकस्मिन्नेव समुद्रयान आगतम्। भाषाज्ञानं तु 'मुसलमान' सुहृदां संपर्केणोपलब्धपरिचित'फारसी अरबी' शब्दमात्रेणासीत्। संस्कृतमहं यावदुच्चविद्यालये शिक्षितं तावन्मात्रमेव प्राप्तवान्। गुजरातीभाषापि यावत्पाठशालायामुपलब्धा तावत्तैव॥

ईदृशं मे मूलधनं येन कार्यं निर्वोढव्यम्। शास्त्रिकसंभाराणामकिंचनत्वेऽपि मम सहवासिन उत्तमगतिं प्रापुः। अस्मद्देशभाषासु प्रीतिरध्यापने मम श्रद्धा मम छात्राणामज्ञानं च शोभनावस्थं मां चक्रुः॥

तामिलबालकाः सर्वेऽपि दक्षिणाफ्रिकायां जाताः। अतः स्वल्पमेव तामिलभाषाज्ञानमेषाम्। न ज्ञातं तैस्तामिललेखनम्। अतो मया लेखनं व्याकरणप्रक्रियाश्चेति विषयाः शिक्षणीया आसन्। इदं तु सुकरमासीत्। तामिलसंभाषणे मां मम विद्यार्थिनः पराजयेरन्। स्थितिरेषां विदिता। आंग्लभाषानभिज्ञस्तामिलियनजनो यदा मां द्रष्टुमागतस्तदा मद्भाषणं व्याचख्युः। अहं सानंदमभवम्। यतो ममाज्ञानं विद्यार्थिभ्यो निगूहितुं न कदापि प्रयतितं मया। प्रत्येकविषयेऽपि यथास्थितोऽहं तथात्मानं तेषां प्रदर्शितवान्। अतो मम महामूर्खतायां सत्यामपि प्रीतिं गौरवं च नैवाहापयम्। 'मुसलमान'बालकानामुर्दूशिक्षणं सुकरमासीत्। तेषां हि लेखनं विदितम्। पठने हस्तलेखने च प्रोत्साहनं मम कर्तव्यमासीत्॥

## षट्चत्वारिंशोऽध्यायः

# व्यवहारिणः सहकारिणो जाताः

**धर्म्यानुष्ठाने** ट्रान्सवालनातालपत्तनयोऽयं विशेषः । यन्नातालपत्तने समाना धर्मसभा वर्तते । धर्मसभाध्यक्षो वादपंडितस्य पदप्राप्त एव प्रतिपुरुषवदभ्यवसेवेत । ट्रान्सवालस्थले मोहमय्यामिव वादपंडितंप्रतिपुरुषयोः कार्यमंडलं भिन्नम् । वादपंडितवद्वा प्रतिपुरुषवद्वा कार्यं करोतु । वरणाधिकारस्तस्य वर्तते । नातालनगरवादपंडितः सन् ट्रान्सवालनगरे प्रतिपुरुषपदं मयान्विष्टम् । वादपंडितः सन् भारतीयजनैः सह साक्षात्संपर्को न लभ्यः स्यात् । दक्षिणाफ्रिकायां गौरांगप्रतिपुरुषा मत्सकाशान्निवेदनं पत्रं न गृह्णीयुः ॥

ट्रान्सवालस्थलेऽपि प्रतिपुरुषाः प्राड्विवाकानां न्यायस्थाने वादायानुज्ञाताः । एकस्मिन्नवसरे जोहानिसबर्गस्थले प्राड्विवाकन्यायस्थाने वादं कुर्वाणो मम व्यवहारिणा वंचित इति दृष्टम् । साक्षिपेटिकायामयमुत्तराणि ददानः संपूर्णमेव खंडितः । अतः कमपि वादं विनैव व्यवहारोऽपास्यतामिति प्राड्विवाकमुक्तवान् । प्रतिपक्षन्यायवाद्याश्चर्यचकितोऽभूत् । प्राड्विवाकः संतुष्टः । असत्यव्यवहारं मत्सकाशमानीतवन्तं व्यवहारिणमभ्यक्षियम् । तेन विज्ञातं मयासत्यव्यवहारा न स्वीक्रियन्त इति । यदाहं तत्सर्वं तत् प्रत्यक्षमानीतवांस्तदा प्रमादमङ्गीचकार । ममेदं प्रतिभाति यदेष मह्यं नाक्रुध्यत् । प्राड्विवाकं प्रति व्यवहारमपसारयेत्युक्तवानहमिति । अस्मिन् व्यवहारे मम कार्यं सुलभतरमासीत् । मम सत्यव्रतत्वं न्यायवादिनां मध्ये मम प्रसिद्धिमवर्धयत् । वर्णभेदं प्राप्तोऽपि केषुचिद्व्यवहारेषु तेषां प्रीतिपात्रमप्यभूवम् ॥

अयमासीन्मम स्वभावो यन्मम मौर्ख्यं मम व्यवहारिभ्यस्तुल्यवृत्तिभ्यश्च नाहं कदापि न्यगूहयम् । यत्र यत्राहं मुग्धः स्थितस्तत्र तत्रेतरन्यायवादिना सहालोच्यतामिति व्यवहार्युच्यते स्म । अथवा यद्ययं ममैव संलग्नः स्थातुमिच्छेत्तदा ज्येष्ठन्यायवादिनो बुद्धिवादः श्रूयतामित्यवोचम् । एतन्निष्कापट्यं व्यवहारिणामपरिमितप्रीतिं श्रद्धां च समपादयत् । यदा यदा ज्येष्ठन्यायवादिना सह समालोचयितुमावश्यकमासीत्तदा तदा नियतशुल्कं दातुं सज्जस्थितास्ते । एषा प्रीतिः श्रद्धा च मम सार्वजनिककार्येषु साहाय्यमकुर्वन् ॥

पूर्वमेव निर्दिष्टं मया यद्दक्षिणाफ्रिकायां मम व्यवहारः स लोकसेवार्थमित्येतदुद्देशार्थमपि लोकविश्वासार्जनमवर्जनीयो नियमः । उदारहृदयो भारतीयजनो द्रव्यार्थे कृतं व्यावहारिककार्यं सर्वं महत्तरीकृतवान् । स्वाधिकारप्रयोजनाय कारावंधनप्रवेशदुःखान्यनुभवितुं प्रेरिताः परमानन्देन बुद्धिवादमङ्गीचक्रुः । कर्तव्यस्य निर्दोषतां विचार्य तथा न कृतं परन्तु मयि श्रद्धाप्रीतिहेतोः ॥

एतल्लिखत बह्व्यः पवित्राः स्मृतयो मम हृदयमायान्ति । परःशता व्यवहारिणो लोकसेवार्थं सुहृदो निश्चितं सहकारिण्यश्च बभूवुः । तेषां समागमेन जीवितं मधुरीकृतमासीत् । अन्यथा संकटापायभरितं यत् स्थितम् ॥

## सप्तचत्वारिंशोऽध्यायः

# कथं व्यवहारी रक्षितः

अत्रान्तरे वाचकः 'पारसीरुस्तमजी'नामधेये परिचितो भवति । स किल एकदा मम व्यवहारी सहकारी च बभूव । अथवा प्रायेण प्रथमतः सहकारी ततो: व्यवहारी भवेति वचनं यथार्थतरं स्यात् । मयि तस्य तावती श्रद्धाभूत् यावती स गृहकृत्येष्वपि मम बुद्धिवादमनुसरति स्म । रुग्णश्चेदपि मम साहाय्यमन्वियेष । यद्यप्यावयोर्जीवनरीतयोऽभिद्यन्त तथापि मद्दुश्चिकित्सामङ्गीकर्तुं विकल्पवान्नासीत् । अयं सुहृदेकदा संकटे पपात । प्रायशः स्वकीयसर्वकार्याण्यपि मह्यं निवेदयति स्म । किन्त्वेकमात्रं मनःपूर्वकं मत्सकाशान्न्यगूहत् । तेन मोहमयीनगरात् कलकत्ता-नगराय बहूनि वस्तून्यानायितान्यभवन् । भूयो भूयः स च्छलेन वस्तून्यलभत । शुल्कग्रहणशाला-लेखकैः सह प्राप्तमैत्रीकत्वान्न कोऽपि तस्मिन् संशयमकरोत् । समर्पितद्रव्यपरिसंख्यापत्राणि तस्माद्विश्वासेन गृह्णन्ति स्म । कतिपये ज्ञात्वाप्युपेक्षां शुल्कचौर्ये कृतवन्तः स्युः ॥

'अखा'नाम्नः गुजरातीकवेः फलवदौपम्यं प्रयुक्तं चेच्चौर्यं पारदवन्निगूह्यत इति पारसीरुस्तमजीमहाशयो नैव वर्जनीयः । सन्मित्रमेष मां प्रति शीघ्रतरमुपाधावत् । नयनाभ्यामश्रूणि कपोलयोः पतन्ति स्म । तेनोक्तं यथा—भ्रातः मया त्वं वंचितोऽसि । अस्मिन्दिने ममापवादः प्रका-शितः । वस्तूनां छलेनानयनं मया कृतम् । अहं विनष्टः । कारागृहं मया गन्तव्यम् । ध्वंसितोऽह-मस्मि । भवानेक एव मां कष्टाद्रक्षितुं समर्थः । मया त्वत्सकाशान्नान्यन्निगूहितम् । ईदृशानि कुव्यापारतन्त्राणि तुभ्यमुक्त्वा त्वां न क्लेशयेदितीदं शुल्कचौर्यं कदापि नोक्तवान् । परन्त्विदानीं कियदनुतप्यत इति ॥

तं शान्तं कृत्वाहमवोचं यथा—रक्षितुं वा न रक्षितुं वा भगवदायत्तम् । मां प्रकृत्य मम मार्गं त्वं जानासि । आत्मापराधस्वीकारेण त्वां रक्षितुं प्रयतिष्य इति ॥

साधुः पापी नष्टचैतन्य इवासीत् । भवतः पुरस्तादपराधस्वीकारः किं न पर्याप्तः ॥

त्वं मयि नापराद्धः किन्तु राज्याधिकारे । कथं मत्पुरस्तात्कृतोऽपराधस्वीकारस्त्वयोपयुज्येतेति समार्दवं मया प्रत्युक्तम् ॥

पारसीरुस्तमजीमहाशयः प्रोवाच यथा – भवतो बुद्धिवादमनुसृत्य सर्वं करिष्यामि । परन्तु मम पूर्वन्यायवादिनापि किं नालोचयसि । असावपि मित्रमिति ॥

विचारे क्रियमाणे शुल्कचौर्यं दीर्घकालाच्चलति स्म । किन्तु यदापराधः प्रकाशितस्तत्संबंधिद्रव्यमत्यल्पम् । वयं तस्य न्यायवादिसकाशं गताः । तत्क्षणे पठित्वा तेनोक्तं यथा व्यवहारः स्थेयगणेन विचार्यते । नातालन्यायस्थानस्य स्थेयगणो भारतीयजनं नैव विमोचयिष्यति । परन्त्वहं निराशो न भविष्यामीति ॥

अयं न्यायवादी मया सम्यग् न ज्ञातः । पारसीरुस्तमजी मध्ये प्रोक्तवान्यथा कृतज्ञोऽस्मि किन्त्वस्मिन् व्यवहारे गांधिमहाशयेन नीयमानमात्मानमिच्छामि । स मां सम्यग्जानाति । आवश्यकत्वे सति तं बोधयितुमर्हसीति । इत्थं न्यायवादिनः प्रश्नमपास्य पारसीरुस्तमजीमहाशयापणं वयं गताः ॥

ततो ममाभिप्रायं प्रकाशयन्नहमुक्तवान्यथायं व्यवहारो न्यायस्थानं नैव प्रवेष्टुमर्हति । शुल्काधिकार्येक एव जानाति । यन्न्यायस्थाने व्यवहारः प्रवेशनीयोऽथवा त्वं विमोचनीय इति । स च प्रतिपुरुषाध्यक्षेण नीयते । उभावपि द्रष्टुमहं सज्जस्थितोऽस्मि तैर्निर्दिष्टं दण्डं दास्यामीति त्वया वक्तव्यम् । ते संमन्यन्ते । नो चेत्कारागृहं प्रवेष्टुं सज्जस्थितेन त्वया भाव्यम् । अत्र लज्जा न तावत्काराप्रवेशे यावदपराधकरणे । कर्म तावत्कृतमेव कारागृहबंधनं प्रायश्चित्तमिति मन्तव्यम् । वास्तविकं तु प्रायश्चित्तं शुल्कचौर्यं न कदापि करिष्यामीति मनसि निश्चयः ॥

पारसीरुस्तमजीमहाशयः सर्वमेतत्कुशलमिति जग्राहेति वक्तुं न शक्यते । स तावद्धीरः पुरुषः । परन्तु तद्धैर्यं तात्कालिकं संप्रति परिक्षीणमासीत् । तस्य नामधेयं यशश्च बाधितमासीत् । तावज्जागरूकतया प्रयासेन च निर्मितं भवनमेव च्छिन्नभिन्नं यदि भवेत्तदा क्व पुरुषस्तिष्ठेत् ॥

उक्तं खलु मयाहं समग्रमेव तव हस्ते स्थितः । यथा रोचते तथा क्रियताम् । अस्मिन् व्यवहारे सुहेतुवादस्य सर्वशक्तिमहं प्रयोजितवान् । शुल्काधिकारिणं दृष्ट्वा निर्भयमेव सर्वो विषयो निवेदितः । सकलपुस्तकानि च युष्मद्वशे स्थापयिष्यामीति वाचं दत्तवान् । पारसीरुस्तमजीमहाशयः पश्चात् कियत्तप्यत इत्यवोचम् ॥

शुल्काधिकारिणोक्तं यथा – वृद्धः पारसीमहाशयो मह्यं रोचते । मूर्खमात्मानमकरोदिति विषीदामि । किं मे कर्तव्यमिति जानासि त्वम् । प्रतिपुरुषाध्यक्षेणाहं नेतव्यः । अहं त्वां बोधयामि तेन सह समाधानवचांसि प्रयोक्तव्यानि ॥

न्यायस्थानं प्रति तमाक्रष्टुं नैव बद्धमानसश्चेत् संतोषः ॥

तत्सकाशादेतावद् वाग्दानमादाय प्रतिपुरुषाध्यक्षाय पत्राणि लिखित्वा तं द्रष्टुं गतः । संतुष्टोऽस्मि वक्तुं यदयं मम निष्कापट्यमभ्यनन्दत् । निःशेषं मयाभिहितमिति व्यश्वसच्च ॥

इदानीं विस्मृतं मया यदस्मिन् व्यवहारेऽन्यस्मिन् वा मम निर्बन्धो निष्कापट्यं च तस्मादिमां वाचमाकर्षत् पश्याम्यहं यद् भवान्नेति प्रतिवचनं न कदापि गृह्णातीति ॥

पारसीरुस्तमजीमहाशयव्यवहारः समये कृत्वा व्यवस्थापितः। यावच्चौर्यं कृतमित्यङ्गीकृतं तावतो द्विगुणद्रव्यं दण्डः प्रदेयोऽभवत् । व्यवहारस्य सर्वानपि विषयान् लिखित्वा पत्रं समीकृत्य निजकार्यालये व्यलंबयद्यथोत्तराधिकारिणां सहवाणिज्यकारिणां च स्मृतिर्जायेतेति ॥

रुस्तमजीमहाशयस्य इमे सुहृदोऽनेन चंचलपश्चात्तापेन वंचितेन भाव्यमिति प्रत्यादिशन् । इमं प्रत्यादेशं रुस्तमजीमहाशयः यदा निवेदितस्तदा तेनोक्तं यद्यहं त्वां वंचयेयं तदा कामे गतिर्भविष्यतीति ॥

इति श्री गान्धिमहात्मनः
सत्यशोधनाख्यायामात्मकथायां
चतुर्थो भागः
समाप्तः

प्रथमोऽध्यायः

# मम प्रथमानुभवः

**गृहप्राप्तिः** पूर्वमेव फीनिक्सआश्रमान्निर्गतो जनः समागतोऽभूत् । प्राक्चिंतितप्रकारेणाहमेव पूर्वमागतः स्याम् । परंतु 'इंग्लेंड'देशे युद्धे संबद्धा मम प्रवृत्तिः सर्वमनोरथान् व्यत्यस्तानकरोत् । 'इंग्लेंड'देशे कालानुमानं विना निरुद्धे मयि फीनिक्सस्थलजनस्य निवासाय स्थानान्वेषणचिंतागता । शक्यं चेत्तैः सर्वैरप्येकत्र स्थित्वा फीनिक्सस्थले यज्जीवनं कुर्वन्ति स्म तदेवात्रापि कुर्युरिति मयापेक्षितम् । मया न कोऽप्याश्रमो ज्ञातो यत्र तान्प्रेषयितुं शक्यं स्यात् । अतस्तन्त्रीद्वारा तेभ्यो न्यवेदयं 'अेन्डुस'महाशयः दृश्यतां तदुक्तप्रकारेण क्रियतामिति ॥

एवं ते प्रथमतः कांगडीगुरुकुले स्थापिताः । तत्र हि स्वामीश्रद्धानंदमहाशयः स्वपुत्रेष्विव तेष्वाचरत् । ततः पश्चाच्छांतिनिकेतनाश्रमे स्थापिताः । यत्र कविरितरे लोकाश्च तान्निज-प्रीतिमग्नान् चक्रुः । एषु स्थलेष्वनुभवस्तान्मां च सुस्थितान् चक्रुः ॥

'अेन्डुस'महाशयस्य यथाहमवादिषं व्यक्तित्रयं नाम कविः श्रद्धानंदः प्रधानोपाध्यायः सुशीलरुद्रश्च । दक्षिणाफ्रिकादेशे यदा वयं स्थितास्तदा तानधिकृत्य भाषणेन वयमायस्ताः । तथा च दक्षिणाफ्रिकायां संवृत्तानां स्मृतिः 'अेन्डुस'महाशयस्य व्यक्तित्रयवृत्तान्तो रात्रिंदिवं भाष्यमाणोऽतीव स्पष्टमधुरः प्रतिभाति । 'अेन्डुस' महाशयः फीनिक्सजनस्य सुशीलरुद्रसंपर्कं कृतवान् । प्रधानाध्यापकस्य रुद्रस्याश्रमो नासीत् । किन्तु तस्यैकं गृहमासीद्यत्र फीनिक्साश्रमजनकुटुंबानि स्थापितानि । तेषामागमनादेकस्मिन्नेव दिने तदीयो जन एतांस्तथा सुखितान् चकार यथा ते फीनिक्सस्थलपरित्यागं नास्मरन् ॥

यदाहं मोहमय्यामवतीर्णस्तदाज्ञासिषं यत् फीनिक्सजनः शांतिनिकेतनमागत इति । तस्माद् गोखलेमहाशयं दृष्ट्वा तानवलोकितुमुत्सुकोऽभवम् । मोहमय्यां मम स्वागतीकरणे स्वल्पसत्याग्रहस्यावकाशं ददौ ॥

'जहांगिर पेटिट' स्थले मम गौरवार्थं कृतसभामेलने गुजरातीभाषायां वक्तुं नाहं धैर्यमास्थितः । उज्ज्वलतेजोविशिष्टराजमंदिरप्रांतपरिवेष्टकेष्वागरकर्मकराणां मध्ये कृतजीवनोऽहं ग्रामीणमिवात्मानममंसि । प्रावारशिरोवेष्टनधोत्रैरद्यापेक्षयाधिकनागरिक इव प्रेक्ष्यमाणोऽपि केंद्रप्रसाद-स्यांडंबरतेजो विशेषेणाचेतन इवासम् । तथापि कथमप्यहं निस्तीर्णः फिरोजशहामहाशयस्य रक्षामण्डपे ॥

आसीदन्या गुजरातीव्यापृतिरेका । स्वागतं विना गन्तुं गुजरातीजनो न माममुञ्चत् । प्रत्यादिष्टमेतत् स्वागतं 'उत्तमलाल त्रिवेदि'महाशयेन । पूर्वमेव कार्यानुक्रमो मया ज्ञातः । जिन्नामहाशयः उपस्थितः सभाध्यक्षो वा प्रधानभाषणकृद्वा न जाने । स आंग्लभाषायां संक्षिप्तभाषणं चकार । यावदहं स्मरामि तावदभूत्सर्वमांग्लभाषायां भाषणम् । मम वारे प्राप्ते गुजरातीभाषायामेव मम धन्यवादपुरःसरं गुजरातीहिन्दुस्तानीभाषयोः पक्षपातमुक्त्वा गुजरातीसभायामांग्लभाषा-प्रयोगस्यासंमतिख्यापनं कृत्वा स्थितः । दीर्घप्रवासानन्तरं निवृत्यानानुभवशाली प्रतिष्ठापिताचाराणां विरोधेन वर्तत इत्येतदसभ्यमिति प्रतिभाति । गुजरातीभाषया प्रतिवचनानन्तरं न कोऽपि ममासंमति-ख्यापनमन्यथा भावयत् । असंमतिख्यापनस्य सर्वे समाहिता आसन् ॥

सभायां मम धैर्यमागतम् यथा मम भिन्नभिन्नाभिप्रायान् मम देशजनस्य पुरस्तात् स्थापयितुम् । प्राथमिकानुभवपूर्णायां मोहमय्यां स्वल्पकालं स्थित्वाहं पुण्यपत्तनं (पूनापत्तनं) गतः । यत्र गोखलेमहाशय आव्हानमदात् ॥

## द्वितीयोऽध्यायः

# पुण्यपत्तने गोखलेमहाशयेन सहवर्तनम्

मोहमय्याः प्रास्थिक्षणमात्र एव गोखलेमहाशयो मां समदिशद्यथा राज्याधिपतिर्मां द्रष्टुमिच्छति । पुण्यपत्तनं प्रति गमनात्पूर्वमेव द्रष्टुमुचितमिति । तदनुसारेण गत्वा तद्दर्शनमग्रहीषम् । कुशलवार्ताविचारानन्तरं तेनोक्तं यथा भवन्तमेकविषयमेव पृच्छामि । यद्राज्यव्यवहारे यत्किंचित् भवान्कर्तुमिच्छति तदागत्य मां द्रष्टुमर्हतीति ॥

मया प्रत्युक्तं यथा सौकर्येण संमतिं दद्याम् । यतो मम सत्याग्रहिणो नियमोऽयं यत्प्रति-कक्षेरभिमतं ज्ञात्वा यावच्छक्यं तदनुरोधिना भवितव्यम् । दक्षिणाफ्रिकायां मयायं नियमोऽनुष्ठितः । तदेवात्रापि कर्तुमिच्छामीति ॥

लॉर्ड-विलिंग्डन् मामभिनंद्योक्तवान्यथा – यदा गंतुमिष्यते तदा गम्यताम् । अस्मद्राज्याधिकार उद्देशपूर्वकं नैव प्रमाद्यतीति ॥

इयमेव श्रद्धास्मदाधारस्तंभो भवतीत्यत्रोचम् ॥

ततोऽहं पुण्यपत्तनं गतः । एतदमौल्यकालस्य स्मृतीः सर्वा निवेदयितुमसाध्यम् । गोखले-महाशयो भारतसंघस्य सदस्याश्च मामत्यादरेणापश्यन् । मम स्मृतौ गोखलेमहाशयो मां द्रष्टुं तान् सर्वानाह्वयत् । सकलविधान् विषयान् तैः सह निरातंकं मयालपितम् ॥

मया भारतसेवासंघः प्रवेष्टव्य इति गोखलेमहाशयस्य तीव्रेच्छासीत्। ममापि तथैवासीत्। परन्तु मम संघस्य च ध्येयानां कार्यानुष्ठानरीतेश्च बहुव्यत्यासस्य विद्यमानत्वात् संघप्रवेशो नोचित इति सदस्यानां प्रत्यभात्। स्वकीयनीतिनियमानां विषये यद्यप्यहं निश्चितमनास्तेषां नीतिनियमान् सोढुमहं सज्जस्थित इति गोखलेमहाशयो व्यश्वसत्॥

किंत्वितरेषाममभिमतस्य योग्यं मूल्यं प्रदातुं यूयं सिद्धा इति संघस्य सदस्यानां न विदितम्। ते किल नीतिनियमानां विषये हठवादिनो भवन्ति । ते भवन्तं स्वीकरिष्यन्तीत्याशा मम विद्यते। कदाचित्तथा न कुर्वन्ति चेत्तेषां युष्मासु गौरवं वादरो वा नास्तीत्येकं क्षणमपि मा मन्यताम्। युष्मासु तैर्निविष्टगौरवस्यापायः संभवेदिति ते भवतः प्रवेशाय विकल्पन्ते । परन्तु ते भवन्तं प्रवेशयितुमेव। वयं तावद्भवन्तं सदस्य इत्येव मन्यामहे इति गोखलेमहाशयोऽब्रवीत्॥

अहं गोखलेमहाशयस्य ममोद्देशान् न्यवेदयम्। मां सदस्यत्वेन परिगृह्णातु वा न वा मम फीनिक्स्कुटुम्बेन गुजरातदेशे क्वचिदाश्रमं परिकल्प्य तिष्ठेयमित्याशा ममासीत् । यतोऽहं गुजरातीदेशस्थो गुजरातसेवाकरणाद्देशसेवाकरणमित्येष एव मम साधुमार्ग इत्यवेदिषम्। गोखलेमहाशयायायमभिप्रायोऽरोचत ॥

उक्तं च तेन यथा–अवश्यमेव भवता तथा कर्तव्यम्। सदस्यैः सह युष्मत्संलापस्य फलं यद्वा तद्वा भवतु। आश्रमस्य व्ययद्रव्यं मत्सकाशादेव ग्रहीतव्यम्। आश्रमो मदीय इत्येव भावयामीति ॥

मम हृदयमानन्दभरितोऽभूत् । द्रव्यसंग्रहपरिश्रमोऽपास्तः। अहमेक एवास्मिन् कर्मणि प्रवर्तितुमावश्यकता नास्ति। यदा यदाहं कष्टे पतितस्तदा तदा कष्टपरिहारकर्ता एको मिलितः। सर्वमेतत् हर्षदायकमासीत्॥

सर्वतोऽस्मात् मम मनःस्थितो भारोऽवतीर्णः। दिवंगतो डॉ. देव आहूतः। संघस्यायव्यय-पुस्तकेषु मम नाम्नैकं खातापुटं निवेश्याश्रमस्य सार्वजनिककार्यस्य च व्ययार्थं मयापेक्षितद्रव्यं दातव्यमित्याज्ञप्तम् ॥

अहं शांतिनिकेतनं गन्तुं सज्जीकृतवान् । प्रस्थानात्पूर्वं गोखलेमहाशयः कतिपयमित्राणि वृत्वा वृत्वा कूटमेकं पर्यकल्पयत्। ममेष्टाहारपदार्थाः फलानि बीजानि चानायिताः। प्रकोष्ठाच्चतुष्पददूरे कूटो मिलितः। तावद्दूरं परिक्रम्य कूटे भागं वोढुं न शक्यमासीत्। मम निविष्टप्रेमातिशयो नागतः। परन्तु मूर्च्छां गत इति पश्चाद्बोढव्य आसीत्। इदं प्रथममेव तथा न मूर्च्छितः। पुनश्चैतन्यं प्राप्तः। कूटश्चालनीय इति वाचं प्रैषयत्॥

अयं कूटः संघस्यातिथिगृहस्याभिमुखे स्थितस्यानावृतप्रदेशे कतिपयमित्राणि मिलित्वा

भूचणकं खर्जूरं तत्काललभ्यफलानि च सेवमानः परस्परं मनोगतं सर्वं वदन् कथालापानकुर्वाणश्च कालातिवाहनं करोति । तदर्थमेव परिकल्पितोऽयम् ॥

परन्तु मूर्च्छापतनं मम जीवने सामान्यविषयो न परिणतः ॥

## तृतीयोऽध्यायः

# तत् किं भर्त्सनम्

अहं मोहमयीतो राजकोटं पोरबंदरं च गतः । तत्र मया हि मम भ्रातृजायेतरबन्धवश्च द्रष्टव्या आसन् ॥

दक्षिणाफ्रिकायां सत्याग्रहयुद्धकालेऽहं मम वेषं यथाशक्यं नियमकर्मकराणां वेषवत्परिकल्पितवान् । 'इंग्लेंड' देशेऽप्ययमेव वेषो धार्यते स्म । मोहमय्यां नौकावतरणकाले धारणाय मन्निकटे 'काठियावाडी' वेषः स्थितः । एका हस्तांगिकैकं धोत्रमेका दीर्घांगिकापि चैकं श्वेतं शिरोवेष्टनम् । सर्वमेतद्हिन्दुस्थाने यंत्रनिर्मितकर्पटनिष्पन्नमासीत् । परंत्वहं तृतीयश्रेण्यां प्रयाणं कुर्वाण इति दीर्घांगिका शिरोवेष्टनं भार इति विमुच्य 'काश्मीरीटोपी'मक्रैषम् । एवंविधवेषधारकं द्रष्टॄणां दीनोऽयमिति गणनायां नैव संशयोऽभूत् ॥

तदा ग्रंथिज्वरे—(प्लेग) प्रसृते तृतीयश्रेणीप्रयाणिकान् वैद्याः परीक्षन्ते स्म । मम स्वल्पज्वर आसीत् । मम शरीरस्योष्णतां दृष्ट्वा वैद्यो राजकोटे वैद्याधिकारी द्रष्टव्य इत्युक्त्वा मम नामधेयमलिखत् ॥

अहं वढवाणद्वारा प्रयाणं करोमीति वृत्तांतस्तेनापि प्रेषित इति प्रतिभाति । यतस्तत्रत्यप्रसिद्धप्रजासेवकः सौचिको मोतीलालमहाशयो लोहशकटीस्थानवेदिकायां मां दृष्ट्वा वीरमगामशुल्कघट्टस्य विचारमनेन कारणेन प्रयाणिकैरनुभूयमानसंकटानि च मह्यं न्यवेदयत् । मम ज्वरेण ग्रस्तत्वाद् भाषितुं नैवेच्छासीत् । अतः संक्षिप्तमुत्तरं दत्त्वा तत्प्रसंगं समापयितुं मया प्रयतितम् । एतदुत्तरं एवंविधप्रश्नरूपमासीत् । यूयं कारागृहं प्रवेष्टुं सज्जस्थिताः किमिति । तेन च दृढतापूर्वमुत्तरं दत्तं यथा यदि भवानस्मत्पुरोगमः स्यात्तदा वयं कारागृहमवश्यमेव गमिष्यामः । यतो वयं 'काठियावाडी' जनास्ततो भवदुपरि प्राथमिकोऽधिकारोऽस्मदीय एव । भवन्तमत्र प्रयाणच्छेदं कर्तुं न वयमपेक्षामहे । परन्तु भवान्पुनरागमनेऽत्र स्थास्यतीति वाग्दानमिच्छामः । अस्मद्युवकानां कार्यमुत्साहं च दृष्ट्वा संतुष्टा भविष्यथ । भवतास्मदाह्वानमेव निरीक्ष्यते । विलंबं विनागत्य संमिलिष्याम इति विश्वासमस्मासु कुरुध्वमिति ॥

मोतीलालमहाशयेनाहं मनसा सूचितः । तस्य सहवासिनामेकस्तं स्तुवन्नाह यथा—सौचिकोऽयमस्मन्मित्रम् । किंत्वयं स्वकार्ये कियद्घटक इति चेद्दिनस्यैकां होरां कार्यं कृत्वैकस्मि-

न्मासे सौलभ्येन पंचदशरूप्यकान् संपादयति । तेनापेक्षितं च तावदेव । अवशिष्टकालं सर्वमपि सार्वजनिकसेवायां विनियुङ्क्ते । शिक्षितपाठलेखनानां सर्वेषां पुरोगामी स्थित्वास्मांल्लज्जयतीति ॥

ततो मोतीलालमहाशयस्य मम च गाढपरिचयो यदाभूत्तदास्यां स्तुतावतिशयोक्तिः कापि नासीदिति ज्ञातम् । सत्याग्रहाश्रमस्य स्थापनानंतरं प्रतिमासं कतिपयदिवसांस्तत्र नीत्वा तत्र बालकानां सीवनकार्यं शिक्षयित्वाश्रमस्य कर्पटेषु कतिपयान् स्वतः सीव्यति स्म । वीरमगामनगरस्य विषयं तत्र प्रयाणिकैरनुभूयमानानि संकटानि च प्रत्यहं मम निवेदयति स्म । पान्थानां संकटं दृष्ट्वा सोढुमेषां केवलमसाध्यमासीत् । आकस्मिकं जाड्यमेनं प्रथमयौवने गृहीत्वा चलितम् । एतदनंतरमवशिष्टानां वढवाणजनानां जीवनं नष्टकल्पमासीत् ॥

राजकोटं प्राप्य परेऽहनि प्रातःकालमेवाहं तत्रत्यं वैद्याधिकारिणमपश्यम् । अयं लज्जितो मम परीक्षकस्योपरि क्रुद्धोऽभवत् । एतदनावश्यकमासीत् । यतः परीक्षकः स्वकर्तव्यमकरोत् । नान्यत् । कोऽहमित्येतत्तस्य न विदितम् । कदाचिद्विदितवानपि तस्मिन् रीत्यंतरेण न वर्तितुमर्हः । वैद्याधिकारी मां स्वपार्श्वे नागच्छति तथा कृत्वा मत्समीपमेकं परीक्षकं प्रेषयति स्म ॥

एतादृशसंदर्भेषु तृतीयश्रेणीप्रयाणिकानां परीक्षणमारोग्यसंरक्षणदृष्ट्यावश्यकमासीत् । महापुरुषा इच्छापूर्वकं तृतीयश्रेण्यां प्रयान्ति चेन्निष्किंचनानामन्वयं गच्छतां नियमनिबंधनानां सर्वेषामपि स्वयं मनःपूर्वकमेव वशीभूय तैः स्थातव्यम् । अपि चाधिकारिभिर्विषयेऽस्मिन् निष्पक्षपातिभिर्भवितव्यम् । ममानुभवं वक्ष्यामि । अधिकारिणस्तृतीयश्रेणीप्रयाणिकान् स्वयमिव तेऽपि मनुष्या इत्यगणयित्वा मेषवत्तान् पश्यन्ति । तैः सह तिरस्कारेण भाषन्ते । तेषामुत्तरेभ्यो न श्रोत्रमर्पयन्ति । तृतीयवर्गप्रयाणिकं भृत्यवदधिकारिण आज्ञां निर्वाहयेरन् । अधिकारी तं ताडयेत् । तस्माद्द्रव्यमपहरेत् । तं यथाशक्ति क्लेशयित्वा तस्य प्रयाणानुज्ञापत्रिकां दद्यात् । बहुवारं तस्य लोहमार्गशकटीप्रयाणमवरोधयेत् । एतत्सत्यं मया मम नेत्राभ्यामेव दृष्टम् । विद्यावतां धनिकानां कतिपये निष्किंचनपदमवतीर्य तृतीयश्रेण्यां प्रयाणं कृत्वा दरिद्राणामलभ्यसौकर्याणि निराकृत्य परिहार्यं संकटानामन्यायस्याविनयस्य च शिरोऽनमयित्वा तानि निर्मूलयितुं यावद्यत्नः क्रियते तावत्कापि सुधारणा न साध्या भवति ॥

अहं काठियावाडदेशे 'यत्र कुत्रापि गतो वीरमगामनगरस्य शुल्कघट्टस्य विचारे जनस्य दुःखख्यापनमशृणवम् । अतोऽहं लॉर्डविलिंग्डन्कृतसूचनामनादृत्य प्रवर्तितुं तत्क्षणमेव निरचैषम् । एतद्विषयसंबद्धप्राप्तसर्वपत्राणि मेलयित्वा दुःखख्यापनस्याधारोऽस्त्यतिविश्वासं प्राप्य मोहमयीराज्येन पत्रव्यवहारं कृतवान् । लॉर्डविलिंग्डनस्याप्तकार्यदर्शिनं दृष्ट्वा राज्याध्यक्षं च विलोकितवान् । अस्मिन्विषये निजसहानुभूतिं व्यक्तं चकार । परन्तु प्रमादं दिल्लीराज्यस्योपरि समर्पितवान् । कार्यदर्शिनोक्तं यथा—अस्मदीयहस्तवशे स्थितं चेच्छुल्कघट्टमितः पूर्वमेवापास्तमभविष्यत् । भवता भारतराज्यस्य पुरस्ताद् गन्तव्यमिति ॥

अहं भारतराज्यस्य पत्रमलेखिषम्। परंत्वेतत्पत्रमागतमिति विनान्यदुत्तरं न लब्धम्। अहं लॉर्डचेम्सफर्डराज्यप्रतिनिधिं यदा दृष्टवांस्तदैवैतत्संकटं परिहृतमभूत्। अहमेतत्संबद्धविषयान् सर्वानस्मै न्यवेदयम्। तदाश्चर्यभरितोऽभूत्। तस्य विरमगामनगरविषय एव न विदितः ॥

मम निवेदनं सह तेन कृत्वा वीरमगामनगरस्य संबद्धपत्राणि सर्वाण्यपि ध्वनियंत्रद्वारानाय्यन्त। अधिकारवर्गस्थाः किमपि समाधानं वक्तुसमर्थाश्चेच्छुल्कघट्टं निष्कास्यत इति वाचं ददौ। तद्दर्शनानंतरं कतिपयदिवसाभ्यंतरे वीरमगामनगरशुल्कघट्टो निष्कासित इति वृत्तान्तं वृत्तपत्रेष्वपठम्॥

एषा घटना हिंदुस्थाने सत्याग्रहस्योदय इत्यहमगणयम्। यतो यदाहं मोहमयीराज्याध्यक्षं द्रष्टुं गतस्तदा कार्यदर्शी वगसारे (काठीयावाडदेशे तथा ग्रामः) दत्तभाषणं सत्याग्रहविषये मयोक्तमाकर्ण्य तथाविधभाषणं न हि मेऽरोचतेत्यब्रवीत्॥

पृष्टं च तेन यथा—अयं भयोत्पादः किम्। प्रबलराज्यं भर्त्सनानां शिरो न नमयतीति किं भवान् मन्यते—इति॥

प्रत्युक्तं मया यथा—एष भयोत्पादो न हि। एतत् प्रजाशिक्षणम्। निजसंकटानि दूरीकर्तुं न्याय्यतां सर्वामिव जनस्य निवेदयितुं मादृशानां धर्मः। प्रजास्वातंत्र्यमर्जनीयमिति इच्छज्जनांगं तत्स्वातंत्र्यसाधनाय सर्वमार्गानुपायांश्च जानीयात्। सामान्यतः एषूपायेषु पशुबलमेवान्तिमोपायः। सत्याग्रहस्तावच्छुद्धाहिंसात्मक उपायः। तस्योपयोगं तस्य मर्यादाश्च जनस्य विशदीकर्तुं मम कर्तव्यमित्यहं मन्ये। 'ब्रिटिश' राज्यं प्रबलराज्यमित्यत्र न संदेहः किन्तु सत्याग्रहः समस्तसंकटानां दिव्यौषधमिति न मे संदेह इति॥

बुद्धिमान् कार्यदर्शी शिरश्चालयित्वा संशयं सूचयन् द्रक्ष्याम इत्युवाच॥

## चतुर्थोऽध्यायः

# शांतिनिकेतनम्

अहं राजकोटाच्छांतिनिकेतनं गतः। तत्रत्याः शिक्षका विद्यार्थिनश्च ममोपरि वात्सल्यवृष्टिं पातयामासुः। अस्मिन्स्वागतसरलता कलाकौशल्यं प्रेम च सम्यगेकत्रस्थितानि। अत्रैवाहं प्रथमतः काकासाहेबकालेलकरमहाशयं दृष्टवान्॥

कालेलकरमहाशयं 'काकासाहेब' इति कस्मादाह्वयन्ति स्मेति तदानीं मम न विदितमासीत्। 'इंग्लंड' देशे यदाहं स्थितस्तदैव केशवरावदेशपांडेमहाशयोऽप्यासीत्। तेषां मम चागाधमैत्र्यासीत्। एष वटोदरसंस्थाने गंगानाथविद्यालयं यदा चालयति स्म तदा गृहस्य वातावरणं

कल्पयितुं शिक्षकानां बंधुत्वनामानि ददाविति मम पश्चाद्विदितमासीत्। तत्रैव शिक्षकस्य श्रीकालेलकरमहाशयस्य 'काका' (पितृव्यः) इति फडकेमहाशयस्य (मातुलस्य) 'मामा' इत्यपि च हरिहरशर्मणः (भ्रातुः) 'अण्णा' इति च नामधेयानि रूढिमागतानि। इतरे चेदृशान्येव नामान्यलभन्त। आनन्दानन्दस्वामी 'काका'महाशयस्य मित्रम्। पटवर्धनमहाशयो 'मामा'महाशयस्य सुहृत्त्वेन तदनन्तरमेतत्कुटुंबं प्रविष्टः। एते सर्वेऽपि कालक्रमेण मदीयसहकार्यकारिणोऽभवन्। श्रीदेशपांडेमहाशयः 'साहेब' इत्याहूयते स्म। विद्यालयो यदा व्यरमत्तदैतत्कुटुंबं च निवृत्तम्। परन्त्वेते निजाध्यात्मिकसंबन्धं निजरूढनामानि वा नात्यजन्॥

'काकासाहेब' अन्यासां संस्थानामनुभवं लब्धुं प्रस्थितः। यदाहं शांतिनिकेतनं गतस्तदा स तत्रासीत्। तस्यैव भ्रातृवर्गस्य चिंतामणिशास्त्रिणस्तत्रासन्। उभावपि तत्र संस्कृतशिक्षणे साहाय्यमकुरुताम्। शांतिनिकेतने फीनिक्सकुटुंबस्य प्रत्येकवसतिर्दत्ताभवत्। 'मगनलालगांधि' महाशयोऽस्य कुटुंबस्य मुख्यस्थोऽभवत्। फीनिक्साश्रमस्य सकलनियमान् स्वल्पमपि स्खलितं विनात्रापि निर्वाहयति स्म। सोऽयं निजप्रेम ज्ञानमभिनिवेश एतैर्निजसौरभं शांतिनिकेतने सर्वत्र प्रसारितवानित्यहमपश्यम्॥

'ॲन्ड्रुझ' महाशयः तत्रासीत्। तत्रैव 'पियर्सन' अपि। अस्माकं गाढपरिचयं गतानां वंगशिक्षकाणां मध्ये 'जगदानंदबाबु-नेपालबाबु-संतोषबाबु-क्षितिमोहनबाबु-नागेनबाबु-शरदबाबु' अपि च 'कलिबाबु' सहस्थिताः॥

मम पद्धतिमनुसृत्याहं तत्क्षणमेव शिक्षकैर्बालकैश्च मिलितः स्वावलंबनस्य विचारं चर्चितवान्। शिक्षका बालकाश्च वेतनग्राहिणं पाचकं त्यक्त्वा निजाहारं स्वयमेव साधयन्ति चेत्तद्बालकानां देहारोग्यदृष्टयाध्यात्मिकदृष्ट्या चाहारनियमसाधनं शिक्षकाणां शक्यं भविष्यति। एतदेव बालकानां स्वावलंबनस्य वस्तुपाठो भविष्यतीति शिक्षकाणामहमवोचम्। तेषां कतिचिदस्मदादिसूचनायाः संमतिं ददुः। बालकाश्च नान्यदर्थेऽपि स्वाभाविककुतूहलेन सूचनामिमामादरेण स्वीचक्रुः। एवमस्माभिः पाकप्रयोगः समारब्धः। अहं कवेरभिप्रायं पृष्टवान्। स च शिक्षकाणां संमतौ मत्तः कोऽपि प्रत्यूहो नास्तीत्यवोचत्। बालकानां स्वराज्यसाधनबीजमस्मिन्प्रयत्ने स्थितमित्यब्रवीत्सः॥

'पियर्सन' अस्य समारंभस्य विजयार्थे स्वदेहं कर्शयितुं प्रवृत्तः। त्रिकरणशुद्ध्यात्रासक्तोऽभूत्। शाकच्छेदाय कृतं मेलनं धान्यप्रक्षालनायान्यत्। एवं रीत्या मेलनानि संवृत्तानि। नगीनबाबुमहाशय इतरे च पाकशालां तत्पार्श्वस्थलं च निर्मलं स्थापयितुं भारमूढवंतः। खनित्रहस्तैरिव कार्यकारणं वीक्ष्य संतुष्टोऽभवम्॥

किन्तु पंचविंशत्युत्तरशतानां बालकानां तदीयशिक्षकाणां च देहश्रमपूर्णं कार्यं मत्स्यानां जलमिव संप्रविष्टं भवतीति निरीक्षितुं शक्यते किम्। एतद्विषयिणी चर्चा प्रत्यहं भवति स्म।

कतिचिज्जनाः शीघ्रमेवायासचिह्नानि प्रदर्शयितुं प्रवृत्ताः । किन्तु पियर्सनमहाशय आयासग्राही पुरुषो न । सर्वदापि मन्दहासेन पाठशालाया आवरणकमपि कार्यं कुर्वाण एव स्थितः । महन्महद्भांडप्रक्षालनभारं स वहति स्म । एतत्कार्यकर्तुर्मेलनस्यायासपरिहाराय बालकानामन्यन्मेलनं तस्य पुरस्तात् 'सितार'वाद्यं ध्वनयति स्म । सर्वेऽपि समरीत्योत्साहेन श्रद्धया च कार्यं कर्तुमारभन्त । शांतिनिकेतनं कार्यशीलतया मधुकोशेनेव झंकारं करोति स्म ॥

ईदृक्परिवर्तनानि यदा प्रारभन्ते तदा विवृत्ताः प्रयान्ति । पाकशालाकार्यकारिणः स्वयमेवं सर्वं निर्वर्तयन्ति स्म । अपि च पाकोऽपि साधारण आसीत् ॥ उपस्करादिकं नोपयुज्यते स्म । शालिधान्यं मुद्गशाकं गोधूमपिष्टं चैकदा बाह्यचुल्लिकायां पाचयन्ति स्म । शांतिनिकेतनस्य बालका अपि बंगपाकशालायामेतत्सुधारणमेवारब्धुमुद्दिष्टा नूतनपाकशालामकल्पयन् । एकद्विशिक्षकाः कतिपयविद्यार्थिनश्चैतच्चालयन्ति स्म ॥

किन्तु स्वल्पकालानंतरमिमां नूतनपद्धतिं व्यरमयन् । स्वल्पकालमेतत्पाकप्रयोगेन सा प्रसिद्धसंस्थानेन किंचिन्नष्टमन्वभूदिति मेऽभिप्रायः । अस्माज्जातानुभवेनोपाध्यायानां लाभदायकेन भवितव्यम् ॥

अहं शांतिनिकेतने कतिचिद्दिनानि स्थातुमना आसम् । किन्तु दैवसंकल्पोऽन्यथाभवत् । एकसप्ताहाभ्यन्तरे पुण्यपत्तनाद् गोखलेमहाशयस्य मरणवार्ता तंत्रीद्वारा प्राप्ता । शांतिनिकेतनं शोकमग्नमासीत् । तत्रत्याः सर्वेऽपि मां समाधातुमागताः । देशेनानुभूयमानं नष्टं प्रति दुःखसूचनायाश्रमस्य देवालये सभा मिलिता । सभाकार्यं गंभीरतया संवृत्तम् । तस्मिन्नेव दिनेऽहं भार्यया मगनलालमहाशयेन च सह पुण्यपत्तनं प्रति प्रस्थितः । अवशिष्टाः सर्वे शांतिनिकेतने स्थिताः ॥

ॲन्ड्रुझमहाशयः मया सह बर्दवानपर्यन्तमागतः । तेनाहं पृष्टो यथा भारतदेशे सत्याग्रहाचरणकाल आगमिष्यति किम् । आगमिष्यति चेत् कदेति किं भवाञ्जानातीति ॥

प्रत्युक्तं मया यथा—वक्तमिदं कष्टम् । एकवर्षपर्यन्तं मया न किंचित्कर्तव्यम् । यतोऽनुभवसंपादनायास्मिन्देशे मया संचरितव्यम् । अस्मिन्काले सार्वजनिकविचारानधिकृत्य ममाभिप्राया न प्रकाशनीया इति गोखलेमहाशयेन पृष्टस्तथेति वाग्दानं कृतवानस्मि । एतद्वर्षान्तेऽपि भाषितुं ममाभिप्रायान्प्रकटीकर्तुं च नातुरोऽस्मि । तस्मान्मन्ये इतः पंचवर्षाणि सत्याग्रहाचरणस्य संदर्भो न भविष्यतीति ॥

'हिन्दुस्वराज' इति पुस्तके लक्ष्यमाणान्मम कतिपयाभिप्रायान् दृष्ट्वा एकवर्षपर्यन्तं भारतवर्षे भवतः स्थित्यन्तरं भवदभिप्रायाः स्वयमेव सम्यग्भविष्यन्तीति वदति स्मेत्येतदस्मिन् संदर्भे निवेदयितुमर्हम् ॥

## पंचमोऽध्यायः

# तृतीयश्रेणीप्रयाणिकानां संकटानि

**प्रयाणानुज्ञापत्रिकां** क्रेतुमपि तृतीयश्रेणीप्रयाणिकानां संभवत्संकटानि वयं बर्दवाननगरे स्वतोऽन्वभूम । तृतीयश्रेणीपत्रिकामियच्छीघ्रं नैव दद्म इत्यूचुरस्माकम् । अहमग्निरथविरामस्थानाधिकारिणं गतः । कोऽपि दयालुस्तस्य स्थानं प्रादर्शयत् । तत्पार्श्वं गत्वास्मत्संकटे प्रोक्ते सोऽपि तदेव प्रत्युत्तरं ददौ । प्रयाणानुज्ञापत्रिका प्रदानगवाक्षे विवृतेऽहं प्रयाणानुज्ञापत्रिकां क्रेतुं गतः । परंतु तद्ग्रहणं सुकरं नासीत् । तत्र पशुबलं विना न किंचिदासीत् । इतरानलक्षयित्वा पुरः पुरोऽतिरभसेन गच्छन्तो जना मां पश्चाद्विक्षिपन्त आगताः । अतः प्रथमतो मिलितसंघे प्रयाणानुज्ञापत्रिकां ग्रहीतुं प्रायोऽहमेवान्तिमोऽभवम् ॥

अग्निरथः आगतः । तदन्तःप्रवेशोऽप्यन्यत्संकटमासीत् । शकटीमारूढानामारोढुं प्रयतमानानां च परस्परनिन्दनं रभसेन क्षेपणं चलन्ति स्म । वयं वेदिकायामितस्ततः प्रधाविताः । किन्तु प्रतिशकटीद्वारेऽप्यत्र नास्त्यवकाशोऽत्र नास्त्यवकाश इत्येव प्रत्युक्तम् । अहं अग्निरथरक्षकस्य पार्श्वं गतः । यत्र शक्यं तत्र गत्वोपविशेत् । नोचेदन्यस्मिन् शकटे गन्तव्यमित्युवाच । किन्तु मम त्वयं कार्यमस्तीति नम्रभावेनावोचम् । इदं श्रोतुं नासीदवसरः । अहं दिग्भ्रांतोऽभवम् । यत्र शक्यं तत्र गत्वोपवेष्टव्यमिति मगनलालमहाशयमुक्त्वाहं मम भार्यया सह मध्यमकक्षाशकटे निषण्णः । अस्मानुपविष्टान् अग्निरथरक्षको ददर्श । 'आसनसोल' शकटीस्थानेऽधिकभाटकं ग्रहीतुमागतः । स मया प्रोक्तो यथा — अस्माकं स्थानप्रदानं युष्मत्कर्तव्यमासीत् । अस्माकं स्थलं दुर्लभमित्यत्रोपविष्टाः स्मः । तृतीयश्रेण्यामवकाशो दीयते यदि तत्र गन्तुं संतोष एवेति ॥

मया सह चर्चां मा कुरुध्वम् । न मे शक्यं वः स्थलं दातुम् । अधिकभाटकं दीयताम् । नो चेदवतीर्य गन्तव्यमित्यब्रवीत् सः ॥

मया कथंचित्पुण्यपत्तनं गन्तव्यमासीत् । अतोऽग्निरथरक्षकेन सह कलहायितुं नैव सज्जस्थितः । तदुक्तप्रकारेण पुण्यपत्तनपर्यन्तं यावदधिकं तावददाम् । किंत्वेतदन्याय्यं मर्मघातकमभवत् ॥

प्रातर्वयं 'मुगलसराई' प्राप्ताः । मगनलालमहाशयस्तृतीयश्रेण्यां स्थानं लब्धवान् । वयं तच्छकटं गताः । तत्राहं प्रयाणानुज्ञापत्रिकापरीक्षकस्य सर्वविषयान्निवेद्य 'मुगलसराई' स्थाने श्रेणीपरिवर्तनाय साक्षिपत्रं विलिख्य दीयतामित्यपृच्छम् । अस्य स न संमेने । 'रेल्वे' अधिकारिणामहमलिखम् । ततः प्रत्युत्तरमागतम् । यथा साक्षिपत्रं विनाधिकभाटकं निवर्तयितुं नास्माकं पद्धतिरस्ति । केवलं युष्मद्विषये पद्धतिरियं लुप्यते । किन्तु बर्दवानात् मुगलसराईपर्यन्तमधिकभाटकं यद्दत्तं तन्न प्रतिदीयते इति ॥

एतदनन्तरं मम तृतीयश्रेणीप्रयाणस्यानुभवा बहवः समभवन्। तत्सर्वमुल्लिख्यते चेत्तदेव पुस्तकं भवति। एषु प्रकरणेषु संदर्भे प्राप्ते सति किंचित् किंचिल्लेखितुं शक्यम्। मम शारीरिकदौर्बल्येन तृतीयश्रेणीप्रयाणमसाध्यं भवति। अयं मेऽत्यंतविषादहेतुर्यद्दौर्बल्यं मे तृतीयश्रेणीप्रयाणं त्याजयतीति ॥

तृतीयश्रेणीप्रयाणिकानां संकटानां 'रेल्वे' अधिकारिणां निरंकुशप्रवर्तनमेव कारणमित्यत्र न संदेहः। किन्तु प्रयाणिकानामविनीतवृत्तिरशौचपद्धतयः स्वार्थपरताज्ञानं च लघूनि कारणानि भवन्ति। अत्र खेदस्य कारणमेतद्भवति यथा वयमौद्धत्येन स्वार्थपरतया च वर्तामह इति तेषां न विदितमिति। स्वयं यद्यत् क्रियते तत्सर्वं स्वाभाविकमेवेति तेषां प्रतिभाति। एतत्सर्वस्यापि मूलकारणं सुशिक्षितमिति मन्यमानैरास्थीयमानमौदासीन्यमेव ॥

यदा वयं कल्याणपत्तनं प्राप्तास्तदा परमायासयुक्ता अभूम। अग्निरथविरामस्थलात् जलं गृहीत्वा मगनलालमहाशयोऽहं च स्नानमकरवाव। मम भार्यायाः स्नानाय परिकल्पयितुमुद्युक्तान् भारतसेवासंघस्य कोलमहाशयः परिचीयास्मत्पार्श्वमागतः। सोऽपि पुण्यपत्तनगाम्यासीत्। तेनोक्तं यथा मम भार्यां द्वितीयश्रेणीस्नानगृहमानेष्यामीति। तस्यादरेण कर्तुमुद्यतस्य साहाय्यं स्वीकर्तुं विकल्पितवान् मम भार्याया द्वितीयश्रेण्यां स्नातुमधिकारो नास्तीति मया विदितमासीत्। परंत्वस्मिन्ननुचिते कार्ये भागी संवृत्तः। सत्योपासकस्यैतदनुचितमित्यहमजानम्। तत्र गत्वा स्नानं कर्तव्यमिति भार्यातुरा स्थितेति न। परं पत्युः पत्न्यां यः पक्षपातः स तस्य सत्यपातं जिगाय। सत्यस्य मुखं मायायाः सौवर्णाच्छादनस्य पश्चान्निगूहितमित्युपनिषत् ॥

## षष्ठोऽध्यायः

# प्रेमोत्पादने प्रयत्नः

पुण्यपत्तनमागत्य सर्वासां श्राद्धक्रियाणां समाप्त्यनन्तरं वयं सर्वे भारतसेवासंघस्य भविष्यद्वृत्तिं स मया प्रवेष्टव्यो न वेति चर्चयितुं प्रवृत्ताः। एतत्प्रश्ननिर्धारणं मम सूक्ष्मकार्यत्वेन पर्यणमत। गोखलेमहाशयस्य जीवितान्तपर्यन्तं मम संघसदस्यत्वं नावश्यकमासीत्। गोखलेमहाशयस्येच्छानुसारेण मम वर्तनं पर्याप्तमासीत्। इयं परिस्थितिर्मम सुखदायिन्यासीत्। क्षुब्धार्णवे नौकानयनाय यथा समर्थो नायकोऽपेक्ष्यते भरतखंडस्य सार्वजनिकजीवने मम मार्गदर्शी कश्चिदपेक्षित आसीत्। गोखलेमहाशयो ममामार्गदर्श्यासीत्। तस्याश्रयेऽहं सुरक्षितो निर्भयश्चासम्। अद्य तस्याभावाद् भारो ममोपर्येव पतितः। संघप्रवेशाय प्रयतनं मम कर्तव्यमिति मन्मतमासीत्। यतः गोखलेमहाशयस्यात्मन एतेन

संतोषो भविष्यतीति मम प्रत्यभात्। ततोऽहं निःसंकोचं दृढतापूर्वकं संघस्य प्रीत्युत्पादनाय प्रयत्नं कर्तुमुद्युक्तः ॥

अस्मिन् समये प्रायः सर्वे संघसदस्याः पुण्यपत्तने स्थिताः। तत्पार्श्वमहं गत्वा विज्ञाप्य तेषां मद्विषये स्थितं संशयं दूरीकर्तुमुद्युक्तोऽभवम्। परन्तु तेषु भिन्नोऽभिप्राय आसीदिति मम प्रत्यभात्। एकः पक्षो मां प्रवेशयितुं सज्जस्थित इतरपक्षायेदं सर्वथा नारोचत। द्वावपि पक्षौ मयैकरीत्याधिकप्रेमशालिनावभूतामिति मम विदितमासीत्। परन्तु तेषां स्वसंघभक्तिस्ततोऽप्यधिकासीत्। यद्वा तद्वा भवतु मयि निविष्टप्रेमापेक्षयाल्पीयान् नासीत् ॥

ततोऽस्मद्विषयचर्चासु नासीदवकाशो मनःकषायस्य। तत्केवलं मुख्यतत्त्वानां संबद्धमासीत्। मम विरुद्धपक्षीयानां स्वाभिप्राया मदभिप्रायाश्चानेकमुख्यविचारेषूत्तरदक्षिणध्रुवसदृशत्वान्मम संघसदस्यत्वे संघसंस्थापनाया मुख्योद्देशानामेव भंगप्राप्तिर्भविष्यतीति संभवः प्रतिभाति स्म। स्वभावत इदं तेषां सहनशक्तिमतिचक्राम ॥

बहुचर्चासमाप्तौ वयं पृथग्भूताः । अन्तिमनिर्णयायान्यां वेलां मिलितव्यमिति निश्चितमासीत्। गृहं गच्छन्नहमालोचनायां मग्नः। संघस्य सदस्येष्वधिकजनानामभिमतबलात् संघप्रवेशः किं युक्तः। एवं कृते गोखलेमहाशये निविष्टगुरुभक्तिः किं भग्ना न भविष्यति। मम सदस्यत्वविषये सांघिकेष्वेतावति तीक्ष्णमतभेदे सति संघप्रवेशस्योद्देशं स्वयं परित्यज्योभयपक्षीयानुभयसंकटादुत्तारयितुमत्युत्तमो मार्ग इति मम स्पष्टं प्रत्यभात्। इत्थमनुष्ठानादेव गोखलेमहाशयविषये मम धर्मपालनं भविष्यतीत्यालोचयम्। एतन्निर्धारणमकस्मान्मम मनस्यस्फुरत्। तत्क्षणमेवाहं श्रीश्रीनिवासशास्त्रिणा मम संघप्रवेशनाय सभा नैव मेलनीयेत्यलिखम्। विरुद्धपक्षीयेभ्यो मे निर्णयोऽयमतीवारोचत। इदं तान् धर्मसंकटादुदतारयत्। एतेनास्मत्स्नेहसंबंधो गाढतरोऽभूत्। वस्तुतोऽहं संघस्य सदस्योऽभवम् ॥

अहं नियमपूर्वकं संघस्य सदस्यो भवितुं युक्त आसम्। विरुद्धपक्षीया मां प्रतिभटीकृत्य स्थिता इत्येतच्च न्याय्यमेवेति। अस्मदीयमुख्यतत्त्वानां विचारेऽस्मन्मध्ये बहलो भेद आसीदित्यनुभवेन ज्ञातम्। परन्तु एतन्मतभेदेनास्मन्मैत्र्या न्यूनता वास्मत्संबंधे कटुत्वं वा न जातम्। तदात्वादेव वयं भ्रातर इव स्थिताः। पुण्यपत्तने यत्संघभवनं तन्मे यात्रास्थानं भवतीति ॥

अहं संघस्य सदस्यो न जात इत्येतत्सत्यं किन्त्वन्तःकरणेऽहं सर्वदा सदस्य इव स्थितः। लौकिकसंबंधादाध्यात्मिकसंबंधो गरीयान्। आध्यात्मिकसंबंधेन विना भूतो लौकिकसंबंध आत्मशून्यो देह इव ॥

## सप्तमोऽध्यायः

# कुम्भमेलः

डॉ. मेहतामहाशयदर्शनार्थं मार्गे कलकत्तायां स्थातव्यमासीत्। अहं तत्र दिवंगतस्य भूपेन्द्रनाथवसोर्मंदिरेऽवतीर्णः। बंगदेशस्यातिथिसत्कारोऽत्र परां काष्ठामगमत्। तत्कालं मया फलाहारः सेव्यते स्म। ततः कलकत्तायां लभ्यानि फलानि सर्वाण्यपि मदर्थं संग्रहीतान्यासन्। गृहस्त्रियः सर्वां रात्रिं जागरित्वा 'बदाम-द्राक्ष' इत्यादीन् निस्तुषीकुर्वन्ति स्म। एतद्देशपद्धत्यास्वादनाय फलानि सज्जीकर्तुं प्रयतन्ते स्म। मम सहवासिभ्यो नानाविधभक्ष्याणि ददुः। यद्यपि मे मनसे रुचितः प्रेमपूर्वकः सत्कारस्तथापि द्वित्रातिथीनां सुखाय परिश्रमो मम सहनातीत आसीत्। परंत्वेतत्संकटादुत्तरीतुमुपायो न प्राप्तः॥

रंगूननगरगामिनीं नौकामारुह्य नौकावेदिकायां प्रयाणमकरवम्। वसुमहाशयस्य मंदिरे बहुलसत्कारसंकटे पतितः। अत्र नौकावेदिकायां प्रयाणिकानां सामान्यसौकर्येऽप्यत्यंतानादरस्यानुभवभागोऽस्माकमागत आसीदेकः स्नानप्रकोष्ठो नाम। तस्यानैर्मल्यमसह्यमासीत्। मलस्थानानि दुर्गंधमलकूपा आसन्। तान्युपयोक्तुं मलमूत्राणि पादन्यसनेन वातिक्रम्य वा गंतव्यमासीत्॥

रंगूननगरं प्राप्य तत्रत्यनौकास्वामिनः प्रतिनिधेः सर्वान्विषयान्निवेद्यालिखम्। एतत्पत्रस्य परिणामेन डॉ. मेहतामहाशय अस्मिन् विषये गृहीतपरिश्रमस्य फलरूपेण वा ममानन्तरप्रयाणं यद्यप्यहं नौकावेदिकाप्रयाणिकोऽभवं पूर्ववन्न कष्टमासीत्॥

रंगूनपत्तनेऽपि मम फलाहारशपथो गृहस्वामिनः संकटहेतुरासीत्। परंतु डॉ. मेहतामहाशयगृहे मम गृहे यावत्स्वातंत्र्यं तावत्स्वातंत्र्यमासीत्। तत आहारस्य समृद्धिं यथाशक्यं निग्रहीतुं साध्यमभूत्। मम भोज्यपदार्थानां विषये मया न किमपि परिमाणं नियमितमासीत्। अतो मदर्थं आनायितनानाविधफलोपरिस्थमोहं मम नेत्रं जिह्वा च परित्यक्तुं न शक्तौ बभूवतुः। भोजनालयनियतः कालो नासीत्। अहं तावदस्तमयात्पूर्वं दिनस्य चरमं भोजनं समापयितुमनापि सामान्यतोऽस्मद्भोजनं रात्रावष्टनववादनात्पूर्वं न संपद्यते स्म॥

एतद्वर्षं पंचदशोत्तरैकोनविंशतिमितेऽब्दे कुम्भमेलः प्रवर्तते स्म। अयं मेलो द्वादशवर्षानंतरमेकदा हरिद्वारे चलति। एतदुत्सवायागन्तुं मम तीव्रेच्छा नासीत्। परंतु स्वगुरुकुले स्थितं मुनशीरामजीमहाशयं द्रष्टुमातुरोऽभवम्। गोखलेसंघो महान्तं स्वयंसेवकदलं कुंभमेले सेवार्थं प्रेपितवान्। पंडितहृदयनाथकुंझरुमहाशयोऽध्यक्ष आसीत्। डॉ. देवमहाशयः वैद्याधिकारी।

फीनिक्सदल एषां साहाय्यार्थं प्रेषयितव्य इत्यामंत्रणमागतम् । ततो मगनलालगांधिमहाशयो मत्तः पूर्वमेव गतः । रंगूनपत्तनात्प्रतिनिवर्तमानोऽहं तद्दलं प्राप्तः ॥

कलकत्तापत्तनात् हरिद्वारपर्यन्तं प्रयाणमतीव दुष्करमासीत् । कदाचिच्छकटे दीप एव नासीत् । शहरानपुरनगरेऽस्मान् वस्तुपूर्णशकटे पशुगोष्ठे वा पूरयामासुः । अस्य पटनाच्छादनाभावाच्छीर्षोपरि मध्याह्नस्य चंडातपस्तस्याधस्तात्प्रज्वलल्लोहभूमिका । एतन्मध्ये वयं दग्धा अभूम । एतादृशप्रयाणोत्पादितपिपासायां सत्यामपि युष्मदीयहिन्दुजनस्य मुसलमानसंस्पृष्टोदकं न पेयमासीत् । हिन्दुजनाज्जलप्राप्तिपर्यन्तं ते निरीक्षमाणाः स्थिताः । इमे हिन्दुजनारुग्णपतिताः वैद्या मद्यं ददातु गोमांसं चापानं वादिशतु 'मुसलमानो'ऽथवा 'ईसायी' औषधस्य मिश्रीकृत्य ददातु वा पुरः पश्चान्न पश्यन्ति न च विचारयन्ति ॥

शांतिनिकेतनेऽस्मदनुभवेन मार्गसंमार्जकस्य कार्यमेव हिन्दुस्थानेऽस्मदनिष्टकार्यं भवतीति विदितमस्माकम् । हरिद्वारे स्वयंसेवकार्थे धर्मशालायां पटमंडपा निविष्टाः । वायुचालनाय डॉ. देवमहाशयः शौचकूपान् निखानितवंतः । एतत्प्रेक्षणाय कतिपयवेतनग्राहिणां मार्गसंमार्जकानामुपरि भारं निवेशयितव्यमासीत् । अत्र हि फीनिक्सदलस्य कार्यं लब्धम् । एषु शौचकूपेषु मलस्योपरि मृत्तिकां क्षिप्त्वा वयं तान् शुचीन् निवेशयिष्याम इत्यब्रूम । डॉ. देवमहाशयः संतोषेण संमेने । एवं सेवां करिष्याम इति वक्ता यद्यप्यहं तथापि कार्यकारको मगनलालगांधि आसीत् । मम कार्यं मुख्यतः पटमंडप उपविश्य दर्शनादानम् । मां द्रष्टुमागतैरनेकैर्यात्रिकैर्धर्मसंबद्धानितरविचारांश्चाधिकृत्य चर्चानुष्ठानमासीत् । एतदन्तरे मम स्वल्पोऽप्यवकाशो न लभ्य आसीत् । स्नान'घाट' प्रत्यप्येते दर्शनार्थिनो मामनुपतन्ति स्म । भोजनकालेऽपि ममैकस्यैव वर्तनस्यापि नावकाशं ददति स्म । दक्षिणाफ्रिकायां कृताल्पसेवया भरतखंडे सर्वत्र गंभीरपरिणामः संवृत्त इत्येवं हरिद्वारे मनसापश्यम् । परन्त्वियं स्थितिस्तावन्मम संतोषदायिका नासीत् । अहं रीतिद्वयस्य संकटमध्ये लग्न आसम् । अहं केनाप्यपरिचीयमानस्थानेऽस्मिन्देशे लक्षांतरजनैरनुभवितव्यानि कष्टनिष्ठुराणि मया सोढव्यान्यासन् । रैल्वेप्रयाणं कुर्वाणो मद्विषयज्ञानां मध्येऽहं तेषां दर्शनाकांक्षाया लक्ष्यमासम् । अनयोर्द्वयोः का परिस्थितिरतीवकरुणाजनका इति निर्धारयितुमसकृन्मम कष्टतरं भवति । एतावति संवृत्तेऽपि जानेऽहं दर्शिनार्थिनामन्धप्रेम्णाहमनेकशः कोपं गतः । इतोऽप्यधिकवारं मनस्तापं गतः । परन्तु तृतीयश्रेणीप्रयाणमसकृत् कष्टतरं परिणतम् । तथापि ममांतःकरणशुद्धेः कारणं भवति । न तु कोपोद्रेकस्य कारणं नैव जातमिति वक्तुं शक्यम् ॥

तदात्वे मम पर्याप्ता कार्यशक्तिरासीत् । जनो मां वीथीषु प्रेक्षणक्षणमेव संभ्रमकारिणीं प्रसिद्धिमहमद्यापि न प्राप्तः । अस्मिन् गतागते मम यात्रिकाणां धर्मभावनापेक्षया तेषामजागरूकता कापट्यमालस्यं च दृष्टिपथमागतानि । तत्र साधूनां गणाः उत्प्लुत्योत्प्लुत्यागताः ।

तद्दर्शनेन ते साधुभोजनं भुक्त्वा सुखशय्यायां शयित्वा संविनोदेन जीवनपथं गन्तुमेव जन्म प्राप्तमिति प्रतिभाति स्म ॥

अत्राहं गां पंचपादामपश्यम् । एतेन ममाश्चर्यमभूत् । परंत्वनुभविनो जना परमार्थं न्यवेदयन् । इदं पंचपादवराकी गौर्दुर्जनानां लोभस्याहुतिरासीत् । सजीवस्य गोवत्सस्य पादमेकं छित्वा तद्गोभुजस्य संलग्नीकृत्य यत्संवृत्तं तदेव पंचमपाद इति ज्ञातमासीत् । द्वयोः प्राणिनोः हिंसाकरणेन संवृत्तमिदं फलमज्ञानिनां द्रव्याकर्षणायोपयुक्तमासीत् । पंचपाददर्शनमनपेक्षमाणो हिन्दुः क्व वर्तते । एतादृशाद्भुतगवार्थे शक्तिमतिक्रम्य दानं कथं न करणीयम् ॥

कुम्भमेलस्य दिनमागतम् । तन्मे चिरस्मरणीयं संवृत्तम् । अहं यात्रार्थी हरिद्वारं न गतः । पवित्रतामन्विष्य तीर्थक्षेत्राणि गन्तुं मया कदापि नापेक्षितम् । तत्र प्रायेण सप्तदशलक्षजना आगता इत्यभ्यूहितमासीत् । सर्वेऽप्येते कपटिनो द्रष्टुमागता इति वक्तुं किं शक्यम् । एषां वहवो जनाः पुण्यमर्जयितुमात्मशुद्धये चागताः स्युरित्यत्र न मे संशयः । एवंविधा श्रद्धात्मनः पुरो वृद्धये सहायका भवतीति वक्तुमसाध्यं न भवेत्तथापि कष्टसाध्यमिति ब्रूयात् ॥

अतोऽहं तामखिलां रात्रिं विचारे मग्नोऽयापयम् । सर्वत्रप्रसृतकापट्यमध्ये स पवित्रात्मा स्थितः । भगवतो दृष्ट्या स निष्कलंकोऽभूत् । हरिद्वारं प्रति यात्रागमनमेव पापकृत्यं चेदहं लोकानां पुरस्तादभिप्रायमेतं प्रकटीकृत्य कुंभदिनमेव हरिद्वारं त्यक्तवान् । हरिद्वारं कुंभमेलं च यात्रार्थिनागमनं निष्कलमं चेत्तत्र प्रसृतस्थितपापवृत्तेः प्रायश्चित्तरूपेण मया किमपि त्यागव्रतमंगीकृत्यान्तःशुद्धिः करणीया । तन्मे केवलं सहजमासीत् । मम जीवनं नियमपूर्वकव्रताचरणस्योपरि रचितमस्ति । तावता औदार्येण मां कलकत्तापत्तने रंगूनपत्तनेऽपि कृतसत्काराणां गृहस्थानामहमनावश्यकमेवोत्पादितकष्टं मम स्मरणमायाति । ततोऽहमाहारवस्तूनां संख्यापरिमाणं निर्धार्यास्तमयात्पूर्वमेव भोजनं समापनीयमिति निरचैषम् । एतन्नियमान्न वहामि चेदग्रे मां सत्कुर्वाणानां गृहस्थानामधिकमननुकूलतायाः कारणं भविष्यामि । परसेवोपक्रमं विना मम सेवायामेव तैर्निरतैर्भवितव्यमिति मम मनस्यागतम् । अतोऽहं हिन्दुदेशे यदा स्थितस्तदा चतुर्विंशतिहोरासु पंचभिः पदार्थैरधिकं न भोक्ष्ये रात्रौ न भोक्ष्ये इति व्रतं गृहीतवान् । एतेन मम संभवन्ति कष्टान्यहं पूर्णमालोचयम् । परंत्वन्यथाकर्तुं लेशतोऽप्यवकाशो न देय इति ममेच्छासीत् । अहं यदा रुग्णपतितस्तदौषधमेकं पंचपदार्थेषु गणनायाः परिणाममचिन्तयम् । पथ्यग्रहणपदार्था गणनायां प्रवेष्टव्या इति निरचैषम् । पर्यन्ते केन हेतुनापि नियममेतं नातिक्रमितव्यमिति निश्चयमकार्षम् ॥

एतानि व्रतान्याचरतो मम त्रयोदशवर्षाणि बभूवुः । एतानि मां कठिनपरीक्षाया लक्ष्यमकुर्वन् । एतैरहं रक्षित इत्यपि वक्तुं शक्यम् । एतैर्मम जीवनपरिमाणमधिकमभूत् । अनेकजाड्यानि दूरीभूतानीत्यहं मन्ये ॥

अष्टमोऽध्यायः

# लक्ष्मणसेतुः

गुरुकुलं प्राप्य भीमकायं महात्मानं मुनशीरामजीमहाशयं दृष्ट्वाहं शांतचित्तोऽभवम् । हरिद्वारस्य कोलाहलो गुरुकुलस्य शांतिरनयोर्मध्ये महदन्तरं तत्क्षणमेव प्रत्यभात् ॥

महात्मा मां स्वप्रेमणि निमज्जयामास । ब्रह्मचारिणो मम शुश्रूषायां निरता बभूवुः । अत्रैव मम प्रथमत आचार्यदेवजीमहाशयस्य परिचयो जातः । ते कीदृशा महानुभावा इति तत्क्षणं मे चित्तगोचरमागतम् । कतिपयविषयेषु यद्यपि वयं भिन्नमतस्थास्तथापि संबंधोऽस्माकं शीघ्रमेव मैत्रीरूपेण परिणतः ॥

गुरुकुले औद्योगिकशिक्षणस्यारंभविचारमधिकृत्याहं रामदेवजीमहाशयाभिरितराध्यापकैश्च सह दीर्घं चर्चामकरवम् । ततः प्रस्थानवेलायां प्राप्तायामहं दुःखितोऽभवम् ॥

श्रुतमासीन्मया लक्ष्मणसेतोः प्रशंसनं बहुशः । अयं हृषीकेशस्य स्वल्पदूरवर्ती लंबमानसेतुरासीत् । मया सेतुमेतमविलोक्य हरिद्वारान्न प्रतिनिवर्तितव्यमिति बहवः सुहृदः साग्रहं मामवोचन् । अहमिमां यात्रां पद्भ्यामेव कर्तुमपेक्ष्य प्रयाणद्वयेन समापयं हृषीकेशस्यैकं ततो लक्ष्मणसेतुं प्रत्येकम् ॥

हृषीकेशे बहवः संन्यासिनो मां द्रष्टुमागताः । तेषामेको मयातीवाकृष्टोऽभवत् । फीनिक्सदलस्वनस्थितस्तद्विषयमधिकृत्य ते स्वामिनोऽनेकप्रश्नानपृच्छन् । अस्मन्मध्ये धर्मसंबंधे चर्चा संवृत्ता । धार्मिकविषयेषु मम श्रद्धा महती स्थितेति तेषां विदितम् । गंगायां स्नात्वा नग्नशिरः पृष्ठमागच्छन्तं मामपश्यन् । मम शिरसि शिखा शरीरोपरि यज्ञोपवीतं च नासन्निति दृष्ट्वा खिन्ना मामवोचन्यथा—आस्तिकहिन्दुजनान् युष्मान् शिखा यज्ञोपवीतं विना स्थितान् दृष्ट्वा दुःखितोऽहम् । एतद् द्वयं हिन्दुधर्मस्य बाह्यचिह्नम् । प्रत्येकेन पुरुषेणेदं द्वयं स्थापयितव्यमेवेति ॥

मयैतद्द्वयस्य त्याग एवैकास्ति कथा । यदाहं दशवर्षदेशीयो बालकस्तदा पोरबंदरबालकान् कुंचिकासरं यज्ञोपवीतस्य बद्ध्वा झणझण इति नादं कुर्वतो दृष्ट्वा ममापि तथाकर्तुमाशाभवत् । तस्मिन्काले काठियावाडदेशस्य वैश्येषु यज्ञोपवीतधारणं न रूढिमागतम् । परन्तु प्रथमत्रयवर्णा यज्ञोपवीतं धारयेयुरित्येवाभ्यासस्तदात्व एव प्रारभ्यते स्म । अस्य परिणामः संवृत्तो यथा गांधिमहाशयकुटुंबीयाः कतिपये धारयितुं प्रवृत्ताः । रामरक्षामध्यापयन् ब्राह्मणोऽस्माकं पितृबालकान् यज्ञोपवीतं धारयामास । यद्यपि मे कुंचिकासरस्यावश्यकता नासीत्तथाप्येकमादाय

तस्मिन्निवेश्य नादयितुं प्रवृत्तः। ततस्तद्यज्ञोपवीते छिन्ने सति तत्र व्यामोहोऽद्यापि स्थितो न वा न स्मरामि परंत्वहं नूतनयज्ञोपवीतं नैवाधारयमिति ज्ञातम्॥

यदाहं प्राप्तवयस्कोऽभवं तदा पुनस्तद्धारणाय हिन्दुस्थाने दक्षिणाफ्रिकायां च कतिपये सदुद्देशपूर्वकाः प्रयत्नाः संवृत्ताः। परंतु ते न फलिताः। यदि शूद्रैर्यज्ञोपवीतं न धार्यं तर्हीतर-वर्णानां को वास्त्यधिकार इत्यहं वादमकरवम्। अपि च ममानावश्यकपद्धतिमनुसर्तुं मया पर्याप्तो हेतुर्न दृष्टः। ब्रह्मोपवीतये न ममाक्षेपः। किन्तु तद्धारणाय कारणमेव नास्ति॥

अहं वैष्णवः सन् कंठे मया कंठी धार्यते स्म। शिखा तावदावश्यकमेवेत्यस्मज्ज्येष्ठा अगणयन्। किन्तु 'इंग्लैंडदेशं' प्रति प्रस्थानात्पूर्वं शिखां निरकासयम्। शीर्षोपरि यदा किंचिन्न विद्यते इदं लोकानां लक्ष्यभूतं हास्यजनकं भूत्वानागरिकोऽहमित्यांग्लजनो मां गणयेदिति भीतिः। एतन्न मम कातर्यं कियद्दूरं गतमिति चेच्छ्रद्धया शिखां रक्षन्तो मम ज्येष्ठभ्रातुः पुत्राः। छगनलालगांधिमहाशयोऽन्ये च स्वशिखा यथा निष्कासयन्ति तथाकरवम्। शिखारक्षणेन तेषां सार्वजनीनकार्यस्य प्रत्यादेशः स्यादिति भीतोऽहं तेषां मम खेदमप्यविचिंत्य यथा निष्कासयन्ति तथा कृतवान्॥

एकोऽहं सर्वांस्तान् विषयान् स्वामिभ्यो निवेद्यावोचं यथा—अहं यज्ञोपवीतं न धारयामि। यद्यप्यसंख्या हिंदवो नैतद्धारयन्ति तथापि मम धारणावश्यकता न मे प्रतिभाति। अपरं च यज्ञोपवीतेनाध्यात्मिकपूर्वजन्मचिह्नेन भाव्यम्। ईदृक् पुनर्जन्मनो यज्ञोपवीतधारी विशुद्धतरमुच्च-तरं च जीवनं कर्तुमिच्छापूर्वकं प्रयतनमावश्यकम्। भारतदेशस्य हिन्दुधर्मस्य चाधुनिकपरि-स्थितौ हिन्दुजना ईदृग्गूढार्थं यज्ञोपवीतं धारयितुं स्वाधिकारसार्थकीकर्तुमर्हन्तीति मम तावत्संशयास्पदं भवति। हिन्दुधर्मोऽस्पृश्यतां निष्कास्योच्चनीचभेदं विहायैवमेव मर्यादामतिक्रम्य स्थितानितरानेकदोषांश्चापसार्य तत एवाविकारमेतं संवादयितुं साध्यम्। अत एव यज्ञोपवीत-धारणं न मे रोचते। परन्तु यूयं शिखाधारणस्य विषये कृता सूचना विचारयोग्येति न संदेहः। एकस्मिन्कालेऽहं शिखावानासम्। असत्यलज्जया सा निष्कासिता। अतस्तां पुन आरोपयेमिति मे प्रतिभाति। एतं विषयमहं सहवासिभिः सह चर्चयिष्यामीति॥

यज्ञोपवीतविषये यन्मयोक्तं तत्स्वामी न संमेने। तद्धारणाय यानि कारणानीति प्रत्यभा-त्तान्येव तेषां धारणावश्यकतां साधयितुमलमित्यलक्ष्यत। अद्याप्यस्मिन्विषये ममाभिप्रायः प्रायेण हृषीकेशे यथाभूत् तथैव स्थितः। भिन्नभिन्ना धर्मा यावद्विद्यन्ते तावत् प्रत्येकस्य किमपि बाह्य-चिह्नमपेक्षितं स्यात्। किन्तु तच्चिह्नमेवाराध्यदैवतमिति गणयित्वा तद्द्वारा स्वधर्म इतरध-र्मापेक्षया श्रेष्ठमिति प्रतिपादयितुमारब्धे तदा तच्चिह्नमपक्षिपेत्। अद्य यज्ञोपवीतं हिन्दुधर्ममुत्तमं कर्तुं साधनमिति न मे प्रतिभाति। ततोऽहं तद्विषये तटस्थः स्थितः॥

परन्तु शिखानिष्कासनाय मम लज्जैव कारणमासीदिति मित्राणां बुद्धिवादग्रहणानन्तरं तां पुन आरोपयितुं निश्चयं कृतवान् ॥

हृषीकेशस्य लक्ष्मणसेतोश्च प्रान्तवर्ति प्रकृतिसौन्दर्यं दृष्ट्वाहं मुग्धोऽभवम्। अस्मत्पूर्विकाणां सौन्दर्योपासनायाः प्रकृतेः सौन्दर्यस्य धार्मिकभावदायिन्यास्तेषां प्रतिभायाश्च भक्त्याहं नमस्कृतवान्। किन्त्वेतान्सुंदरसंनिवेशान् यथा जन उपयुंक्ते स्म तदालोक्य मम संकटं जातम् ॥

यथा हरिद्वारे तथा हृषीकेशेऽपि जना वीथी गंगानदीतटं च मलेन दूषयन्ति स्म। गंगायाः पवित्रोदकं मलिनीकर्तुमपि नैव व्यकल्पंत। लोकानां गमनागमनस्थलं विहाय स्वल्पदूरं गंतुं यद्यपि न कष्टमासीत्तथापि वीथीषु नदीतटे च मलमूत्रविसर्जनं कृतं दृष्ट्वा मम हृदयं खेदेन बहुव्यथमापत् ॥

लक्ष्मणसेतुर्नाम गंगानद्युपरिनिबद्धलंबमानलोहसेतुरासीत्। न कंचिदन्यत्। प्रथमतस्तत्र रमणीयरज्जुनिर्मितसेतुरासीदिति निवेदितम्। उदारबुद्धिः कश्चन मारवाडिमहाशयो रज्जुसेतुमेनं निर्मूल्याधिकद्रव्यव्ययेन लोहसेतुं निर्माप्य कुंचिकां राज्यस्य वशे प्रादात् किल। मया नैव दृष्टो रज्जुसेतुरिति तद्विषये न किंचिद्वक्तुं शक्तम्। किन्तु लोहसेतुस्तादृक्संनिवेशे केवलमनुचितं भूत्वा तत्रत्यसौन्दर्यं विनाशयति ॥

एवं यात्रिकाणां सेतोः कुंचिकाया राज्यायार्पणं मम तादात्विकराजनिष्ठायाः सहनमप्यतिक्रांतमासीत्। सेतोरतिक्रमानन्तरं प्रायः स्वर्गाश्रमः शोचनीयस्थितावासीत्। कतिपयच्छिन्नभिन्नलोहकुटीराणि विना न किंचिदन्यदासीत्। श्रुतं मयैतानि साधकेभ्यो निर्मितानीति। तदा तत्र बहवः साधकजना नाविद्यन्त। मुख्यमंदिरे स्थितानेकद्विजनान्वीक्ष्य मम न संतोषोऽभूत् ॥

किन्तु हरिद्वारे ममानुभवा अमूल्यमेव परिणताः। मया कुत्र स्थातव्यं किं कर्तव्यमिति निर्धारयितुं मम तेभ्यो बहुलं साहाय्यं संवृत्तम् ॥

## नवमोऽध्यायः

# आश्रमस्थापनम्

**कुंभमेलं** प्रति गमनात्पूर्वमेकदाहं हरिद्वारं गतः ॥

सत्याग्रहाश्रमः पंचदशोत्तरैकोनविंशतिमिति वत्सरे 'मे'मासस्य पंचविंशे दिने स्थापित आसीत्। मया हरिद्वारे निवसितव्यमिति श्रद्धानंदस्वामिनामपेक्षासीत्। कलकत्तावासिनो मम कतिचिन्मित्राणि वैद्यनाथधामनि स्थातव्यमित्यसूचयन्। मया राजकोटनगरं वरणीयमितीतरे

साग्रहं सूचनामदुः । परन्तु यदाहममदाबादनगरद्वारा प्रयाणमकरवं बहवः सुहृदो मया तत्रैवावस्थातव्यमिति निर्बन्धं विधायाश्रमस्य व्ययद्रव्यस्य स्वयं संगृह्य प्रदानं मे प्रतिज्ञाय निवासगृहं दापयिष्याम इत्यवोचन् ॥

ममापीच्छामदावादनगरस्योपर्येवासीत् । यतोऽहं गुजरातीजनस्ततो गुजरातीभाषाद्वारा सेवां कर्तुं मम शक्यमित्यहममंसि । अपरं च हस्तसूत्रयन्त्रस्य पुरातनकेंद्रं गृहव्यवसायोऽपि च हस्तसूत्रवयनमनयोः पुनरुज्जीवनस्यामदाबादपत्तनमेवात्यनुकूलं क्षेत्रं परिणमेदिति निरीक्ष्यते स्म । अपरं च तत्पत्तनं गुजरातस्य राजधानीति धनिकप्रजानां साहाय्यमितरस्थलापेक्षयाधिकमत्र लभ्येतेत्याशावर्तत ॥

अमदावादपत्तनस्थैर्मित्रैः सह चर्चितानां विषयाणामस्पृश्यताप्येकासीत् । अवकाशस्य प्राप्तिक्षणमेव यं कंचिद्योग्यमंत्यजमाश्रमं प्रवेशयिष्यामीति स्पष्टमेव न्यवेदयम् । वैष्णवमित्रमेको युष्मन्नियमरक्षकोन्त्यजः पुत्रलभ्य इत्यात्मविश्वासेनापृच्छत् । पर्यन्त आश्रमं अमदाबादपत्तने स्थापयितुं निश्चयं कृतवान् ॥

वासस्थलस्य प्राप्तिविषये अमदावादपत्तनवर्ती ब्यारिस्टरश्रीजीवनलालदेसाईमहाशयः सर्वापेक्षयाधिकमालंबनं ददौ । ते स्वकीय ' कोचरब ' बंगलो ' भाटकेन दातुं संमेने । वयं तदेव ग्रहीतुं निरचैष्म ॥

अस्माभिः प्रथमतो निर्धारणीयो विषय आश्रमस्य किं नामधेयमिति । अहं मम मित्राणां मतमपृच्छम् । तैः सूचितनामधेयेषु सेवाश्रमस्तपोवनमित्यादि स्थितम् । सेवाश्रम इति नामधेयं मह्यमरोचत । परन्तु ततः किंविधा सेवेति न स्पष्टमासीत् । तपोवनमित्याडंबरवान् प्रत्यभात् । यतो यद्यपि तपोऽस्माकं प्रियं वयं च तपस्विन इत्याख्यातुमर्हता न दृष्टा । सत्योपासनमेवास्मिन्मतमासीत् । सत्यशोधनं सत्यसाधनं चास्मदुद्योग आसीत् । दक्षिणाफ्रिकायां मया प्रयुक्तां पद्धतिं भरतखंडस्य परिचयं कारयितुमिष्टवान् । एवं परिचितीकरणं कियद्दूरं शक्यमिति भरतखंडे परीक्षणीयमितीच्छास्माकमासीत् । तस्मान्मम सहवासिभिर्मया च सत्याग्रहाश्रम इति नामधेयं वृतम् । यतोऽस्मिन् पदेऽस्मद्ध्येयं सेवापद्धतिश्च मिलितस्थितावास्ताम् ॥

आश्रमकार्यस्य निर्वहणाय नियमनिबंधावलिरेकावश्यक्यासीत् । ततस्तां सज्जीकृत्य मित्राणामभिप्रायार्थे सा प्रेषिता । अस्माभिः प्राप्तानेकाभिप्रायेषु सरगुरुदासबेनरजीमहाशयेन यो दत्तः स मे स्मृतौ वर्तते । स नियमान् संमेने । परन्तु तेषु नम्रतायाश्च स्थानं देयमित्यसूचयत् । यतस्तादात्विकयुवकेषु नम्रता नासीदेवेत्ययममन्यत । यद्यप्येषा न्यूनता मम विदितासीत्तथापि नम्रताया व्रतत्वेन ग्रहणे तन्नम्रतारूपेण न स्थातुं शक्यमिति शंकितोऽहम् । नम्रतायाः पारमार्थिकोऽर्थो निरहंकारः । अहंकारनाशो नाम मोक्षः । मोक्ष एव व्रतं भवितुं न साध्यम् । परन्तु तत्साधनायेतरव्रतान्यावश्यकानि स्युः । मुमुक्षोरथवा सेवकस्य कार्येषु

नम्रताया अथवा निरभिमानस्याभावे तस्य मोक्षस्याशा नास्ति । सेवा करणीयेतीच्छा नास्ति । नम्रताविरहिता सेवा स्वार्थपरताहंकारः ॥

कालेऽस्मिन्नस्मद्देशे त्रयोदशतामिलजना अविद्यन्त । पंचतामिलबालका दक्षिणाफ्रिकादेशान्मया सहागताः । सर्वैर्मिलित्वा वयं पुरुषाः स्त्रियश्च पंचविंशतिरास्म ॥

आश्रमस्थापनमित्थमासीत् । सर्वेऽप्येकस्यां पाकशालायां भोजनमकरवाम । सर्वैरप्येककुटुंबस्थैरिव वर्तितुं प्रयत्नः क्रियते स्म ॥

## दशमोऽध्यायः

# दुष्परीक्षोत्तरणम्

आश्रमस्थापनात्कतिपयमासाभ्यंतरेऽस्माकमेका 'परीक्षागता । एवंविधा परीक्षा मया न निरीक्षिता । अमृतलालठक्करमहाशयोऽकिंचनानां प्रामाणिकानामस्पृश्यानां कुटुंबमेकमाश्रमं प्रवेष्टुमिच्छति । किं वो नानुज्ञास्यथ इति तस्य पत्रमेकमागतम् ॥

अहं भीतोऽभवम् । अन्त्यजनानां कुटुंबमेकं तत्रापि 'ठक्करबापा' महाशयसदृशजनस्य माध्यस्थ्येनाश्रमं प्रवेष्टुं तावच्छीघ्रमागमिष्यति–इति मया नैव परिगणितम् । मम सहवासिभ्यः पत्रमपठम् । ते तस्य विज्ञापनामादरेण संमेनिरे ॥

तत्कुटुंबस्य सर्वेऽपि जना आश्रमनियमान् पालयितुं सिद्धाश्चेद्वयं संमन्यामह इति स्पष्टतयामृतलालठक्करमहाशयस्य पत्रमलिखम् ॥

दूदाभाईमहाशयाय तस्य भार्या 'दानीबहेन' अपि च तत्कालमेव शिक्ष्यमाणपरिक्रमा शिशुर्लक्ष्मीरेते तत्कुटुंबजनाः । दूदाभाईमहाशय एतत्पूर्वमेव मुंबईपत्तने उपाध्यायोऽभवत् । ते सर्वेऽप्याश्रमस्य नियमानुसारं वर्तितुं संमेनिरे । ततस्ते प्रवेशिताः ॥

परन्तु तेषां स्वीकारेणाश्रमस्य साहाय्यं कुर्वाणेषु मित्रेषु संभ्रमः प्रवृत्तः । कूपविचार एव प्रथमतः कष्टमागतम् । अयं कूपो 'बंगलो'मंदिरस्य स्वामिनः स्वाधीन आसीत् । अस्मज्जलभांडस्य जलबिंदुपतनात् स्वयमपवित्रो भविष्यामीति जलोद्धारस्य सेवक आक्षेपमकरोत् । ततोऽयमस्मान्निंदितुं दूदाभाईमहाशयं च पीडयितुं प्रवृत्तः । अधिक्षेपवचनानि सोढव्यानि जलोद्धरणं नैव परित्यक्तव्यमिति प्रत्येकोऽपि निवेदितः । निंदावचः श्रुत्वापि निराकुलस्थितान् वीक्ष्य लज्जयास्मान्क्लेशयितुमत्यजत् ॥

परन्तु द्रव्यसाहाय्यं सर्वं व्यरमत् । आश्रमस्य नियमानुसृत्यास्पृश्यस्य विचारे कृतप्रश्नाः सुहृदस्तादृगागमिष्यतीति नैव निरीक्षां चक्रिरे ॥

द्रव्याशायां निवृत्तायामस्मान्बहिष्कुर्वन्तीति वार्ता श्रुता । वयं सर्वस्याप्यस्य सज्जस्थिताः । अस्मान् बहिष्कृत्य सामान्यसौकर्येषु वर्तितेष्वपि वयममदाबादनगरं न त्यजामः । ततः प्रति चंडालवीथीं प्राप्य स्वयं संपादनेन यत्किंचिल्लब्ध्वापि जीवनं निर्वाहयिष्याम इति सहवासिभ्य उक्तमासीन्मया ॥

अस्मदीया परिस्थितिः कीदृशी संवृत्तेति चेदेकस्मिन्दिने मगनलालगांधिमहाशय आगामिमासस्य व्ययार्थं न किंचिदस्तीत्यवोचत् ॥ अहं समाहित एव तर्हि ' भंगी 'वीथीं गमिष्याम इत्यवोचम् ॥

एवंविधपरिणामा इदं प्रथममेव न । ईदृशसंदर्भेषु सर्वेषु भगवानन्तिमक्षणे साहाय्यं प्रेषितवान् । मगनलालमहाशयस्य स्वधनकोशस्य स्थितिप्रत्यादेशात्परं कतिपयदिनेष्वेकस्मिन् दिवसे प्रातरेको बालको मत्पार्श्वमागत्य कश्चिच्छ्रेष्ठी बहि'मोटर'याने मां निरीक्षमाणः स्थित इत्यवोचत् । तमहं द्रष्टुं गतः । अहमाश्रमस्य स्वल्पसाहाय्यं कर्तुमिच्छामि । तद्भवान् किं स्वीकरिष्यतीत्यपृच्छत् । उक्तं मया यथावश्यमेव । अपि चाद्य मम द्रव्याभावेन मार्गमेव न पश्यामीवेति ॥

श्वः प्रातरिमां वेलामत्रागंतास्मि । किं भवानत्र स्थास्यति इत्यपृच्छत् । अस्त्वेति प्रोक्ते स प्रस्थितः । परेद्युर्निश्चितवेलायां 'मोटर'यानमागत्याश्रमस्य पार्श्वे स्थितः । यानस्य शृंगनादोऽभूत् । बालका वार्तामिमां वस्तुं मत्पार्श्वमागताः । श्रेष्ठी अन्तर्नागतः । अहमेव गत्वा तमपश्यम् । स मम हस्ते त्रयोदशसहस्रमित'नोट'पत्राणि दत्वा प्रस्थितः । मयैतदाशापूरणं नैव निरीक्षितमासीत् । अपि च साहाय्यकरणस्य रीतिः । अयं सद्गृहस्थ आश्रमस्यांतः पदं नैव निवेशितवान् । यावदहं स्मरामि तावदेकवारमात्रं मया दृष्ट आसीत् । आश्रममागत्य नैव दृष्टवान् । नैव विचारितवान् । निराकुलं धनं दत्त्वा गतः । एष मेऽत्यंतासाधारणोऽनुभव आसीत् । एतेन साहाय्येनास्माभिः ' भंगी ' निवासगमनं निरुद्धम् । अस्माकं सौकर्यं प्राप्तमेकवर्षपर्यंतं निरातंकं जीवनं समभवत् ॥

यथा बहिश्चंडमारुत उत्थितस्तथाश्रमस्यान्तेऽपि प्रचंडवातश्चलितः । आफ्रिकायामस्पृश्यमित्राणि मद्गृहमागत्य मया सह यद्यपि भुंजते स्म तथाप्याश्रमेऽस्पृश्यप्रवेशो मम भार्याया इतरस्त्रीणां चेष्टं नासीदिति प्रतिभाति । दानीबहेनविषये आसामप्रीतिर्नासीदिति चेत्तासामौदासीन्यं मम सूक्ष्मदृष्टौ पतितमेव । मम सूक्ष्मश्रोत्रयोरश्रुतं नासीत् । परंत्वाश्रमांतःस्थितमेतन्मनःकषायं मम सहनशक्तिमतिक्रम्यावर्तत । 'दानीबहेन' सामान्यस्त्री आसीत् । दूदाभाईमहाशयोऽल्पशिक्षणं प्राप्तवानपि बुद्धिमानासीत् । तस्य सहनं दृष्ट्वा मम संतापो जातः । सकृत् सकृत् क्रुद्धो भवति स्म । तथापि तस्य सहनं विशिष्टमासीदिति मम लक्ष्यमागतम् । अल्पाल्पा अपमानाः सोढव्या इति मया प्रार्थितः । तस्यायं न केवलं संमतिमदात्परं स्वभार्याया अपि तथा कर्तुं प्रेरितवान् ॥

कोचरबग्रामं परित्यज्य गन्तुं ग्रंथिज्वर एव पर्याप्तः प्रत्यादेश इति मम प्रत्यभात् । अहमदाबादनगरे कश्चिद्वणिगासीत् । श्रीपूंजाभाईहिराचंदनामेति । तस्याश्रमस्य च गाढसंपर्कः संजातः । स बहुषु विषयेष्वाश्रमस्य निर्मलनिरभिमानभावेन साहाय्यं करोति स्म । अहमदाबादसंबद्धव्यवहारेषु तस्य विशेषतोऽनुभव आसीत् । युष्माकमनुकूलां भूमिमहमुपस्थापयिष्यामीति स्वयमेवाब्रवीत् । अहं स्थलान्वेषणाय तेन सह कोचरबग्रामस्योत्तरदक्षिणभागेषु भ्रमंस्त्रिचतुःक्रोशदूर उत्तरदिग्वर्तिनीं भूमिमेकामन्विष्य तमब्रवम् । सोऽप्यद्यतनाश्रमस्थानं निरणैषीत् । तत् साबरमतीकारागृहनिकटवर्तीत्यतो विशेषगुणः प्रत्यभात् । कारागृहगमनं सत्याग्रहिणां साधारणी स्थितिरिति ,गणनया स्थानमेतन्मह्यमरोचत । अपि च कारागृहस्थानार्थं वृतभूमेः समन्तात्स्वच्छता विद्यत इति मया ज्ञातम् । प्रायः सप्ताष्टदिवसेषु क्रयपत्रं लेखितम् । तद् भूमेरुपरि मंदिरं वा वृक्षको वा नासीत् । परन्तु नदीतीरे एकांतस्थाने तस्य वर्तनं बह्वनुकूलमासीत् ॥

गृहनिर्माणात्पूर्वमस्माभिः पटमंडपेषु वस्तव्यम् ॥

कुटीरान् निर्माय तत्र पाकः करणीय इति निरचैष्म ॥

आश्रमः शनैः शनैर्वर्धते स्म । पुरुषाः स्त्रियः शिशवश्च सर्वे मिलित्वास्माभिश्चत्वारिंशज्जनैः एकस्यामेव पाकशालायां भुज्यते स्म । एतत्स्थलं गत्वावस्थानकल्पना सर्वा मदीया । तां कार्यरूपमानेतुं यथासंप्रदायं भारो दिवंगतमगनलालमहाशयस्योपरि पतितः ॥

निवासाय स्थिरगृहाणां निर्माणात्पूर्वं वयं बहु क्लेशिताः । वर्षाकालः समीप आगत आसीत् । वस्तूनि चतुःक्रोशदूरवर्तिनो नगरादानेतव्यान्यासन् । तत्कालपर्यन्तं वंध्यायां भूमौ सर्वाः स्थिताः । अस्यां परिस्थितौ बालशिशुभिः सह निवस्तुमपायो बहुलः प्रत्यभात् । अहननं सर्पाणां सामान्यतो नियम आसीत् । परंत्वेतद्विषजंतुभ्यो भयमस्माकं स्थितमेवेति संमन्तव्यम् । अस्मिन्दिनेऽपि तन्न गतम् ॥

विषजंतूनामहनननियमः फिनिक्सस्थले टॉलस्टॉयक्षेत्रे साबरमत्यांच बहुश आचरितः । एतत्प्रत्येकस्थलेऽपि मया वंध्यभूमावस्थातव्यमासीत् । परन्तु सर्पदंशेन प्राणहानिर्न संजाता । एतत्संदर्भे समालोचिते मम श्रद्धापूरितदृष्टेः करुणामयस्य परमेश्वरस्यामृतहस्तः प्रतिभाति । देवो न पक्षपाती । मनुष्याणां दैनंदिनकार्ये प्रवेष्टुं तस्य समयो नास्तीत्युक्त्वा मम श्रद्धां प्रति न कोऽपि हसतु । एतमेकमेवानुभवं वर्णयितुमेतद्विषयस्य वास्तव्यतां व्यक्तीकर्तुं च मम वागन्तरं न प्रतिभाति । भगवतो मार्गवर्णने मानुषभावनायाः पूर्णचैतन्यं नास्ति । भगवतः कार्याण्यवर्णनीयानि । मनुष्यस्य बुद्ध्या न प्राप्यानीत्यहं जानामि । परन्तु पामरो मनुष्यस्तानि वर्णयितुं प्रवृत्तश्चेन्ममाव्यक्ताक्षरमेव गतिर्नान्यो मार्गो विद्यते । पंचविंशतिवर्षकालपर्यन्तं प्राणिनामहनननियमो न्यूनाधिकत्वेनाचरितोऽपि तत्कालमपायराहित्ये केवलमाकस्मिकः संभवो न भवति । सेश्वरस्य

कृपेति श्रद्धापि मूढविश्वास इत्युक्तेऽपि तां मूढभक्तिमेवालिंगिताहमस्मीति न संदेहः ॥

अहमदाबादनगरे कर्मकराणां कर्मत्यागकलहे चलति सति वयनशालाया वास्तु निवेश्यते स्म। यतो वयनमाश्रमस्य मुख्यकार्यमासीत्। सूत्रतांतवं तदात्वपर्यंतमस्माकमसाध्यमासीत्॥

## द्वाविंशोऽध्यायः

# उपवासः

**प्रथमसप्ताहद्वये** पेषणयंत्रस्य कर्मकरा बहुलं धैर्यमात्मसंयमं च प्रादर्शयन्। प्रत्यहं महतीः सभाः कुर्वन्ति स्म। अवसरेषु तदीयप्रतिज्ञास्तत्स्मृतिमानीयन्त। अस्य ते प्राणत्यागमपि कुर्मो न पुनः प्रतिज्ञातं न कुर्म इति उच्चैरूचुः॥

परन्तु पर्यन्ते शिथिलीभवनचिह्नं प्रादर्शयन्। यथा मनुष्याणां दौर्बल्यं क्रोधावस्थायां दृश्यते तथा कर्मत्यागविरोधेन कर्म कर्तुं गच्छतां कर्मकराणां क्रोधः कर्मत्यागः शिथिलीभविष्यतीति दृष्ट्वा परं ववृध इति॥

ते कलहकारित्वमातिष्ठन्तीति मया शङ्कितम्। प्रत्याह्निकसभासु जनसंख्याल्पाल्पा भवति स्म। तत्रागतानां मुखे नैराश्यमुद्रा सत्यं ददृशे। पर्यन्ते कर्मत्यागिनः कर्मकराः पतयालवो बभूवुरिति वार्ता ममागता। अहमत्यन्तं खिन्नोऽस्मिन्संदर्भे किं मम कर्तव्यमिति तीव्रमनोविचारे निमग्नः। दक्षिणाफ्रिकायां संवृत्तस्यागाधकर्मत्यागस्यानुभवो ममासीत्। किन्त्वत्र मे परिस्थितिरन्या बभूव। कर्मकरैर्मया निर्दिष्टप्रकारेण प्रतिज्ञातम्। ते तत्र प्रतिदिनं ममाग्रे पुनः पुनरब्रुवन्। तेऽधुना तद्विरुद्धमाचरेयुरिति कल्पनापि मम मनसि नोत्तिष्ठेत्। अस्य मनोभावस्याधारो ममाहंकारो वा कर्मकरेषु स्थितं मम प्रेम वा मम तीव्रसत्योपासना वा को ब्रूयात्॥

यदेकस्मन्दिने प्रातः कर्मकराणां सभा भवति स्म। अहमंधकारे मार्गमपश्यन्मार्गमन्विष्यामि तदा दिव्यज्योतिर्मत्साहाय्यार्थमागतम्। कमपि प्रयत्नं विनोदतिष्ठत्॥

उक्ता च सभा मया—यावत्कर्मत्यागिनो मिलित्वा यः कोऽपि निर्णयो भविष्यति यावच्च पेषणयंत्राणां परित्यागपर्यन्तं कर्मत्यागं न तन्वन्ति तावदहमाहारं न स्पृशामीति॥

कर्मकराणामुपरि वज्रपात इवाभूत्। श्रीअनसूयाबाईमहाशयायाः कपोलयोर्जलप्रवाहो निःसर्तुमुपाक्रमत्। उक्तं च कर्मकरैर्यथा—उपवासं मा कुरुध्वम्। वयमिह स्थास्यामः किमिदमुपवासः क्रियत इति। अस्मत्प्रमादः क्षन्तव्यः। इतो वयमस्मत्प्रतिज्ञां यावत्पर्यन्तं करिष्याम इति॥

प्रत्युक्तं च मया यथा—युष्माकमुपवासो नावश्यकः। युष्मत्प्रतिज्ञानुष्ठीयते यद्यलं तावता।

अस्मन्निकटे धनं नास्तीति युष्माकं ज्ञातमेव लोकेभ्यो भिक्षामादाय जठरं पूरयित्वा कर्मत्यागानुष्ठानं मह्यं न रोचते । अतः कर्मत्यागः कियन्ति चिद्दिनानि चलतु । युष्माभिर्निश्चितैर्भूत्वा केनचिदुद्योगेन जीवनस्य पर्याप्तिं संपादयितुं प्रयतनीयम् । ममोपवासः कर्मत्यागसमाप्तावेवान्तं गमिष्यतीति ॥

एतदन्तरे वल्लभभाईमहाशयः कर्मत्यागिनां कर्मकराणां पौरसभायां यत्किंचित्कार्यं संपादयितुं प्रयतमान आसीत् । परन्तु तत्रैतदाशापूरणायाधिकमवकाशो नासीत् । आश्रमस्थिततांतवशाला या भूतले वालुकायाः संग्रहणीयत्वादेतत्कार्ये कतिपयजना नियमितव्या इति मगनलालगांधिमहाशयः सूचयामास । कर्मकरा एतं निर्देशमादरेण स्वीचक्रुः । श्रीअनसूयाबाईमहाशया शीर्षोपरि कंडोलं विन्यस्याग्रेसरी स्थिता । शीघ्रमेव नदीतलकंदराद्वालुकाकंडोलात् धारयित्वा प्रचलतां कर्मकराणां संततप्रवाहो ददृशे । एतद्दर्शनयोग्यं दर्शनमासीत् । कर्मकरेषु नवचैतन्यं प्रदिष्टमेव तेषां प्रत्यभात् । तेषां भृतिप्रदानं कष्टकरं परिणतम् ॥

ममोपवासे एको दोष आसीत् । यतो मया पूर्वोक्तप्रकारेण मम पेषणयंत्रस्वामिनां च निकटमधुरसंबन्ध आसीत् । ममोपवासेन तन्मानसोपरि परिणामो न भवतीति किं न स्यात् । मम सत्याग्रहिणः सत एतद्विरोधेनोपवासो न कर्तव्यः । कर्मकराणां कर्मत्यागस्यैकस्यैव प्रभावेन तन्मानसोपरि यथा पतेत्तथा कर्तव्यमिति मम विदितमासीत् । पेषणयंत्रस्वामिभिः कृतकस्यापि दोषस्यार्थे मयैतदुपवासव्रतमंगीकृतम् । कर्मकराणां दोष एव तस्य कारणमासीत् । यतोऽहं तत्प्रतिनिधीभूत्वा दोषभागी आसमिति मम प्रत्यभात् । स्वामिष्वहं सविनयनिवेदनमात्रं कर्तुं साध्यमासीत् । तान् प्रत्युपवासग्रहणं बलोद्बंधोऽभविष्यत् । कथं ममोपवासस्तन्निबध्नातीति यद्यपि मे विदितं—वस्तुतस्तथैव परिणतम् । तस्योपायान्तरं नास्तीति मे प्रत्यभात् । उपवासाङ्गीकारो मम कर्तव्यमिति मे स्पष्टमदृश्यत ॥

स्वामिनां मनः शान्तं स्थापयितुं मया प्रयतितम् । युष्मन्मार्गं परित्यक्तुं वो लेशतोऽपि नावश्यकमित्यहं तानब्रुवम् । परन्तु तैर्ममोक्तानि गौरवेण न दृष्टानि । एतावदेव न । परं ते ममोपरि तीक्ष्णान् सूक्ष्मांश्च वाग्बाणान् चिक्षिपुः ॥

कर्मत्यागविषये पेषणयंत्रस्वामिनां निश्चलस्थितेः कारणभूता मुख्यव्यक्तिः शेठ-अंबालालमहाशय आसीत् । तस्य मनोदार्ढ्यं निर्मलनिष्कापट्यं च विस्मयजनके बभूवतुः । तौ मम हृदयमाचकर्षतुः । तदग्रे स्थित्वा कलहायितुं संतोषकार्यमासीत् । ममोपवासनिर्बन्धो मम मनोऽतीवादुःखयत् । इदमुक्त्वा तद्धर्मपत्न्याः श्रीसरलादेव्याः ज्येष्ठभ्रातृवद् भावनासीत् । अतस्तां ममोपवासकारणाद्दुःखमनुभवन्तीं दृष्ट्वा सोढुमशक्यमासीत् । प्रथमदिवसे श्रीअनसूयाबाईमहाशया इतराणि कतिचिन्मित्राणि कर्मकराश्चोपवासं चक्रुः । परन्तूपवासो न कर्तव्य इति कष्टेन तान् प्रेरितवान् ॥

एतत्सर्वस्य फलरूपेण सौहार्दस्य वातावरणं सर्वत्रापि प्रससार । पेषणायंत्रस्वामिनामन्तःकरणं द्रवीभूय विवादमेतमन्तं गमयितुं कमपि मार्गमन्वेष्टुं प्रावर्तत । अनसूयाबाईमहाशयाया गृहं चर्चाकूटानां मन्दिरमासीत् । पर्यन्ते श्रीआनन्दशंकरध्रुवमहाशयं मध्यस्थं चक्रुः । मम कृतोपवासस्य त्रीणि दिनान्यभूवन् । तावदंतर एव कर्मत्यागो व्यरमत् । कर्मकराणामिष्टं विभज्य स्वामिनः सुसंधेः स्मृतिं स्थिरीचक्रुः । एवमेकविंशतिदिनानि कर्मत्यागे चलति विवादः समाप्तोऽभूत् ॥

उत्सवाय मिलितानां कूटे पेषणयंत्रानां स्वामिनस्तस्य मुख्याधिकारी चागताः । अस्मिन्संदर्भे मुख्याधिकारी कर्मकरानधिकृत्य यूयं सर्वदा गांधिमहाशयस्योक्तप्रकारेण प्रवर्तध्वमिति बुद्धिवादमवदत् ॥ एतद्घटनासमाप्तेरल्पकालेनैवैतैः सद्गृहस्थैः सह कलहः संवृत्तः । परन्तु तादात्विकसंदर्भा व्यत्यस्था बभूवुः । तेन सह तेऽपि परिवर्तनं गताः । तदा ते खेडाग्रामस्थकृषीवलानां मम वचनं न श्रोतव्यमिति प्रत्यादिशन् ॥

यावद्विनोदकरं तावत्करुणाजनकं विषयमेकमनावेद्य प्रकरणमिदं न समापनीयम् । एतन्मिष्टविभजनसंदर्भे संवृत्तम् । पेषणयंत्रस्वामिनः परः'शतमण'मितं मिष्टमानायितं चक्रुः । तत्परः सहस्रकर्मकराणां कथं विभजनीयमिति महान् प्रश्न आसीत् । यस्य वृक्षस्याधस्तात् 'कर्मकराः प्रतिज्ञां चक्रुस्तस्यैव वृक्षस्याधो विभजनमुचितमिति निर्धारितम् । इदमुक्त्वेतरत्र तत्समाहारो बहनानुकौल्यकारणमभविष्यत् ॥

एकविंशति दिनानि नियमेन वृत्तो जनो मिष्टप्रदानकाले यत्किंचिदपि संकटं विना पंक्तौ क्रमेण स्थास्यति । मिष्टार्थ एकस्योपर्यन्यो यथा न पततीति मम सरला बुद्धिर्ममोवाच । परन्तु परीक्षाकाले प्राप्ते विभजनाय कृतः सर्वोपायो न सार्थको बभूव । निमिषद्वयं यावत्प्रदाने पंक्तिं परित्यज्याभिधावति स्म । कर्मकराणां मुख्यस्थास्तत्र सर्वं क्रमेण यथा चलति तथा यावच्छक्यं साहसं चक्रुः । परन्तु तत्सफलं नासीत् । तत्रत्याभिधावनं त्वरा चान्ते कियदधिकं बभूवेति चेद्बहुतरं मिष्टं पादप्रहारेण नष्टं बभूव । अनावृतप्रदेशे मिष्टविभजने प्रयत्नः पर्यन्ते परित्याज्य एवासीत् । मिरजापुरस्थित शेठ-अंबालालमहोदयस्य गृहेऽवशिष्टमिष्टं कथंचित् नीतमस्माभिः । परेद्युस्तद्गृहावरण एव मिष्टं क्लेशं विना विभक्तमासीत् ॥

अस्यां घटनायां विनोदास्पदोंऽशः स्वल्प एवास्ति । परन्तु करुणाजनकस्यांशस्योल्लेखनमुचितं भवति । ततो विचार्यमाणेऽहमदाबादस्थभिक्षुकवर्गः 'एकटेक' वृक्षस्याधो मिष्टप्रदानसमाचारं कथंचिज्ज्ञात्वा तत्र गणश आगतः पिष्टशून्यजठर आतुरेण हस्तं लंबयन्नित्येतदेव तावदभिधावनस्य कोलाहलस्य च कारणमभूदिति विदितमासीत् ॥

अस्मद्देशस्य वेदनारूपं बहुदारिद्र्यं निराहारत्वेधश्च कियत्कठिनमिति चेद्वर्षे वर्षेऽधिकजनान्याचकसमूहे मज्जयति । पिष्टार्थेऽनुभूयमाना तेषां गतिर्मानमर्यादात्मगौरवं चैतस्य

संपर्कमेव निष्कासयति । अपि चास्मद्धनिकदानिनः कार्ये नियोजनं विना एतेषां भिक्षां प्रयच्छन्ति ॥

## त्रयोविंशोऽध्यायः

# खेडासत्याग्रहः

मम विरामः स्वल्पोऽपि न लब्धः । यावदहमदावादनगरस्य पेषणयंत्रकर्मकराणां कर्मत्यागो न समाप्तस्तावदहं खेडाजनपदसत्याग्रहयुद्धाय गन्तव्यमापतितम् ॥

खेडाजनपदस्य बहुभागेषु सस्यानामरूढत्वात्तत्रत्यापरिस्थितिः क्षामसदृशी बभूव । खेडाजनपदस्थकृषीवलास्तद्वर्षस्य भूकरविलंबनाय प्रयतमानाः स्थिताः ॥

यावदस्मिन् विषयेऽहं कृषीवलानां निर्दिष्टाशयप्रदानात्पूर्वं श्रीअमृतलालठक्करमहाशयस्तत्रत्यपरिस्थितिं विमृश्य तद्विषयकं सत्रं न केवलं लिखितवान् परं तत्प्रांतस्य मुख्याधिकारिण प्रश्नमेकं मुखतश्चर्चयामास । श्रीमोहनलालपंड्याशंकरलालपरीखमहाशयावेतावेतद्युद्धाय प्रविश्य श्रीविठ्ठलभाईपटेलमहाशयोऽपि च दिवंगतसरगोकुलदासकहानदासपारेखमहाशयद्वारा मोहमयीशासनसभायां वादानुवादं कारयामासतुः । एतद्विषये राज्याधिपतिं द्रष्टुं कतिपयाः समितयस्तत्पार्श्वं गताः ॥

अस्मिन्समयेऽहं गुजरातसभाया अध्यक्षोऽभवम् । इयं सभा राज्याधिकारिणं प्रति प्रार्थनापत्राणि तंत्रीप्रार्थनां च प्राहैषीत् । अधिकारिणोऽधिक्षेपांस्त्रासवचनानि च क्षमया निगीर्णवती ॥

अस्मिन्विषयेऽधिकारवर्गस्य कर्मनिर्वहणं कियद्धास्यकरं मर्यादाशून्यं चासीदित्येतत्स्मृतौ इदानीं नैतच्छ्रद्धातव्यं भवति ॥

कृषीवलानां प्रार्थना दिनप्रकाशवद्विस्पष्टा बभूव । परिमिता च सा येन राजकीयाः संमन्तुं न कोऽप्यन्तरायआसीत् । भूकरस्य नियमानुसारेण चतुराणकापेक्षया सस्यवृद्धिरल्पतरा भवेद्यदि कृषीवलैर्भूकरस्य विलंबनं प्रार्थनीयमासीद्राजकीयास्तु चतुराणकापेक्षया अधिका सस्यवृद्धिर्जातेति स्वमतमाख्यान्ति स्म । कृषीवलास्तु चतुराणकादल्पेति वदन्ति स्म । परन्तु राजकीयानां लोकवार्तायाः श्रवणं न प्रथमम् । मध्यस्थो नियोजनीय इति लोकैः प्रार्थिते सति तां प्रार्थनां राजकीया द्रोहमित्यगणयन् । प्रार्थनपत्रिका विज्ञापनाश्च यदा निष्फला बभूवुस्तदा मम सहचराणां मतमाश्रित्य कृषीवलानां सत्याग्रहमाचरितुं ममाशयमदाम् ॥

एतस्मिन् कलहे न केवलं खेडास्वयंसेवकाः परं श्रीवल्लभभाईपटेल-शंकरलालबँकर-श्रीमतीअनसूयाबाई अपि च श्रीइन्दुलालकनैयालालयाज्ञिक-महादेवदेसाई-महाशयप्रभृतयो मम सहचरा आसन्। अस्मिन्युद्धे प्रविश्य श्रीवल्लभभाईमहाशयेन सम्यक्चलितं वर्धमानं च न्यायवादिकार्यं परित्याज्यमासीत्। तत्पुनः नैव प्रारंभितमिति वक्तव्यम्॥

सर्वेषामस्माकं निवस्तुं पर्याप्तोऽवकाशो न लभ्य आसीदिति नडियादनगरस्यानाथाश्रमेऽस्मत्कार्यकेन्द्रं प्रवृत्तम्॥

सत्याग्रहिणः अधोलिखितप्रमाणस्य स्वहस्ताक्षरं ददुः॥

अस्मद्ग्रामेषु सस्यं चतुराणकापेक्षयाल्पतरं जातमिति वयं राजकीयानागामि वर्षं यावद्भूकरं न गृह्णीध्वमिति प्रार्थयाम। राजकीयास्त्वस्मत्प्रार्थनां नागणयन्। अतो वयमधस्तात् स्वहस्ताक्षरकृतो राज्याधिकाराय पूर्णं भूकरप्रदानमथवैतद्वर्षस्य शेषं च न दास्याम इत्येवं प्रमाणतो वक्ष्यामः। राजकीयाः स्वापेक्षापूर्वं व्यवहर्तुमस्मदन्तरायो नास्ति। वयं भूकरस्याप्रदानेन यः परिणामः स संतोषेणानुभविष्यामः। अस्माभिः स्वयं भूकरप्रदानेनास्मत्पक्षो न सत्य इति गणयितुमवकाशप्रदानापेक्षया राज्याधिकारोऽस्मदीयभूमिं परित्याजयितुं संमन्यामहे। परं तु मंडलेऽस्मिन्राजकीया द्वितीयभागप्रदानं विलंबयन्ति चेदस्माकं ये प्रदाने शक्तास्ते भूकरं समग्रं वा प्रदाय शेषं वा प्रदास्यामः। प्रदाने समर्थाः कुतो न प्रदास्यन्तीति चेत्तैः प्रदाने दरिद्राः कृषीवला वित्रस्ताः स्वैः प्रदेयं दातुं स्ववस्तुविक्रयेण वा ऋणं कृत्वा वात्मोपरि दुःखमापातयेयुरित्येव प्रदाने शक्तेऽपि भूकरप्रदानं दरिद्राणां कृते स्वकर्तव्यमित्यस्माकं प्रतिभाति॥

एतत्कलहमधिकृत्य ममानेकाध्यायान् लेखितुमशक्यम्। अतस्तत्संबद्धानि मधुरस्मरणानि व्यक्तव्यानि भवन्ति। एतन्मुख्यकलहसंबद्धानतिशयानवगन्तुमिच्छन्ति तैः श्रीशंकरलालपरीख-महाशयेन विरचय्य प्रकटीकृतः खेडाजनपदसत्याग्रहस्य संपूर्णविश्वसनीय इतिहासः पठनीयः॥

## चतुर्विंशोऽध्यायः

# पलांडुचोरः

**चम्पारण्यं** भरतखंडस्य बहुदूरकोणे स्थितत्वाद्वृत्तपत्रिकाप्रतिनिधीनां तद्युद्धस्य बहिष्कृतत्वाद्-वहवो बाह्यावेक्षका अनाकृष्टा बभूवुः। परन्तु खेडासंग्रामस्य विषयोऽन्य आसीत्। अस्य घटनाः प्रत्यहं वृत्तपत्रिकासु प्रकटीक्रियन्ते स्म॥

गुजरातीजना अस्मिन् रणक्षेत्रेऽतीव कुतूहलिनो बभूवुः। अस्मिन् विजयलाभाय ते द्रव्यप्रदानाय सज्जस्थिताः। केवलं धनसहायेन सत्याग्रहं कर्तुमशक्यमित्यवगन्तुं तेषां न सुलभमासीत्। सत्याग्रहस्य साधनेषु द्रव्यापेक्षयाल्पतरमूल्यं वस्तु न किंचिद्विद्यते। बहुधोक्तापि मोहमयीस्थश्रेष्ठिनो यावदस्माकमावश्यकमासीत्ततोऽप्यधिकं द्रव्यं प्रेषयामासुः। अस्य फलं किं जातमिति चेद्रणसमाप्तावस्मदीयहस्ते धनमवस्थितम्॥

सत्याग्रहिभिः स्वयंसेवकः सरलजीवनस्य नूतनः पाठः शिक्षणीय आसीत्। तैस्तत्सर्वं संपूर्णतया वक्तुमशक्यम्। किन्त्वेते स्वजीवनक्रमं बहुशः पर्यवर्तयन्॥

कृषीवलानामपि तद्युद्धं नूतनो विषय आसीत्। अतोऽस्माभिर्ग्रामाद्ग्रामं गत्वा सत्याग्रहस्य तत्त्वानि विवरणीयानि बभूवुः। अधिकारवर्गस्था लोकप्रदत्तकरद्रव्येण स्व-वेतनं लभन्ते तस्मात्ते प्रजानां भृत्या न तु स्वामिन इत्यवगत्य भयं यस्मात्त्यजन्ति तथाकर्तुमेव मुख्यो विषय आसीत्। अपि च निर्भये सति विनयरक्षणं च स्वकर्तव्यमिति यथा जानीयुस्तथा कर्तुमसाध्यमिव प्रत्यभात्। अधिकारिभ्यस्त्यक्तभयानामपमानः संभवति चेत्तत्प्रतीकारविधानात् कथं ते दूरीकर्तव्याः। किन्तु तेऽविनयेन यदि वर्तन्ते तद्दुग्धभांडस्थदुग्धमिव विषबिन्दुना सत्याग्रहं विनाशयति। तैर्विनयवृत्तिपाठो मया निरीक्षितप्रकारेण सम्यङ् न शिक्षित इति मया पश्चाद्विज्ञातम्। विनय एव सत्याग्रहस्य कठिनांश इति ममानुभवात्सम्यगवगतम्। अत्र विनयो नाम प्रतिपक्षस्य शुभं करणीयमित्याशापि च नैजमाधुर्यं च भवति। न पुनः समयानुकूलमभ्यस्ता मृदुवाक्। एतैः सत्याग्रहिणः प्रतिकार्यरूपमास्थेयम्॥

प्रथमतो बहुना धैर्येण यद्यपि जनाः प्रवृत्तास्तथापि राजकीयाः प्रबलदंडं विधातुमिच्छव इव नादृश्यन्त। किन्तु तेषां मनस्थैर्यं न चलतीति दृष्ट्वा राज्याधिकार उग्रतरं दण्डं प्रारेभे। वस्तुग्रहणाधिकारिणो गोधनं विचिक्रियुः। अपि च स्वहस्तग्राह्याणि चरवस्तूनि सर्वाणि जगृहुः। दंडार्पणपत्राणि स्वीकारयामासुः। तत्र तत्र रूढसस्यान् जगृहुः। एतेन कृषीवला धैर्यहीनाः कतिपये प्रदेयं ददुः। इतरेऽधिकारिभिश्चरवस्तुग्रहणं कृत्वा प्रदेयकरं यथा गृह्णीयुस्तथा कर्तुमैच्छन्। अन्ये च कतिपयेऽन्तपर्यन्तं कलहायितुं सज्जस्थिताः॥

एतासु घटनासु प्रवर्तमानासु श्रीशंकरलालपरीखमहाशयस्य कृषीवलः कश्चित् स्वेन कृष्यमाणाया भूमेः करं प्रादात्। एतेन कलकल उत्थितः। शंकरलालपरीखमहाशयस्तां भूमिं धर्मकार्यार्थे प्रदाय स्वकृषीवलेन कृतं प्रमादं तत्क्षणमेव समीचकार। एवं स निजमानरक्षणं न केवलं चक्रे परमितरेषामप्युदाहरणमस्थापयत्॥

त्रस्तानां हृदयं प्रस्तरीकर्तुं मोहनलालपंड्यामहाशयस्य नेतृत्वे पलांडुसस्यमपनेतुमाशयमदाम्। तत्पलांडुसस्यं राजकीयैः प्रमादेन गृहीतमासीत्। इदमहं शासनस्य सविनयभङ्ग इति नागणयम्। यद्यपि कदाचित्तत्तथैवासीत्। निरूढसस्यानामेव ग्रहणं यद्यप्यक्षरशः

शासनानुरोधेनैव तथापि नैतिकदृष्ट्या तदपराध एव । अपि च बलादपहारो नान्यत् । अतो राजकीयग्रहणमलक्षयित्वा पलांडुग्रहणं जनस्य धर्म एवेत्यहमसूचयम् । एवंविधशासनभङ्गेन फलितं कारागृहवासो दण्डप्रदानं यथा जनः स्वयमेव लभते । तथा पाठशिक्षितुरेतत्सुसंधिर्बभूव । श्रीपंड्यामहाशयस्य तावदीदृगनुभवोऽत्यादरविषयोऽभवत् । सत्याग्रहस्य तत्त्वानुसारेण प्रवृत्तयत्किंचित्कार्यकारणाच्छिक्षामननुभूय संग्रामस्यान्तगमनं तस्मै न रुरुचे । तस्मात्स्वयमेव क्षेत्रात्पलांडूनपनेष्यामीत्यग्रेसरः स्थितः । अस्मिन्कार्ये समाष्टजना मिलिताः ॥

राजकीयाः कथमेतान् स्वतंत्रान् मुञ्चेयुः । मोहनलालमहाशयस्तन्मित्राणि च राजकीयैर्गृहीता इति जनस्योत्साहो ववृधे । कारागृहस्य त्रासे पलायिते सति दंडनस्योग्रता यथा वर्धते तथा जनस्य धैर्यमुत्साहश्च वर्धेते । विचारणादिने जना गणशो न्यायस्थानमुपस्थिताः । पंड्यामहाशयस्तस्य सहचराश्चापराधिन इति निर्णीय तेषामल्पकालपर्यन्तं कारागृहवासोऽदीयत । पलांडूनामपनयेन 'पीनलकोड'प्रकारेण चौर्यापराधलक्षणानि सन्तीति न्यायाधिपस्य निर्णयोऽन्याय्य इति मे मतमासीत् । किन्तु न्यायस्थानानां परित्याग एवास्मन्नीतिपद्धतिरित्यतस्तन्निर्णयोपरि 'अपील' न चक्रे ॥

एतानपराधिनो यात्रामास्थाय जनैः कारागृहं गताः । तद्दिने श्रीमोहनलालपंड्यामहाशयो लोकैः 'पलांडुचोरः' इति गौरवप्रदं विरुदं समपादयत् । एतद्गौरवमद्याप्यस्य चलति ॥

खेडासत्याग्रहस्य परिसमाप्तिमग्रेतनाध्याये विवरिष्यामि ॥

## पंचविंशोऽध्यायः

# खेडासत्याग्रहस्यान्तः

सत्याग्रहकलहोऽनिरीक्षितमवसानं प्राप । लोकाः परिश्रान्ता इति स्पष्टमासीत् । अतिदृढकाया रभसेनाक्रम्य विनष्टा भवितुमनुमन्तुं मया विकल्पितम् । संग्रामं विरमयितुं सत्याग्रहिणां स्वीकार्यः समीचीन एको मार्गो मयान्विष्यते स्म । ईदृगेकः केवलमनिरीक्षितो लब्धः । नडियादतालुकस्थो 'अमलदारो' "धनिकाः कृषीवला यदि प्रदेयं करं यच्छन्ति तदा निर्धनैः कृषीवलैः प्रदेयं विलम्बं सहते" इति संदेशं प्राहैषीत् । इदं मम लेखनद्वारा निवेदनीयमित्युक्तोऽसौ तथा चकार । किंतु अमलदारः स्वजनपदमात्रस्य पर्यनुयोज्य आसीत् । अतो मंडलाधिकार्येव मंडलस्य सर्वभागानां संबंधेऽधिकारयुक्त आसीदिति च ज्ञायमानत्वान्मयोपरि निवेदितकार्यं सर्वमंडलस्याप्यन्वयं भजति न वेति विचार्याहमलिखम् । तैः प्रत्युक्तं तथाविधाज्ञा

सर्वत्र प्रेषितेति । ममेदं न विदितमासीत् । किंतु तस्मिन्यथार्थे सति लोकस्य प्रतिज्ञा पूर्णाभवत् । अस्मत्प्रतिज्ञाया उद्देशोऽपि तदेवासीदिति वाचकानां स्मृतिरस्तीति मन्ये । अतो वयमनयाज्ञया तृप्ता इति व्यक्तीकृतम् ॥

परंत्वनया समाप्त्या मम संतोषो नाभूत् । यतः प्रतिसत्याग्रहयुद्धस्यान्ते द्रष्टव्यं माधुर्यमत्र नासीत् । मंडलाधिकारी स्वेन व्यवस्थापयितुं न किंचित्कृतमितीव वर्तते स्म । निर्धनेभ्यः करग्रहणमाज्ञप्तमासीत् । किंत्वेतेनात्यल्पजनानामानुकूल्यमासीत् । को निर्धन इति निर्धारणं लोकायत्तम् । परन्तु ते तन्नाचरन् । तदाचरितुं चैतन्याभावं तेषु वीक्ष्य दुःखितोऽभवम् । अत एतद्युद्धसमाप्तिः सत्याग्रहस्य विजय इति जनस्य विजृंभणे सत्यप्यहं तत्रोत्साहवान्नाभवम् । यतः पूर्णविजयस्य मुख्यांशा अत्र न स्थिताः ॥

सत्याग्रहिण आरंभापेक्षयान्तेऽधिकशक्तिमन्तस्तेजोवंतश्च यदि भवन्ति तदा तादृशं सत्याग्रह-युद्धं योग्यमिति वक्तुं शक्यम् ॥

यद्यप्येवं तथाप्यप्रत्यक्षाः सत्परिणामा नाभूवन्निति न । एतेऽद्यास्मद्गोचरमायान्ति । एतेषां फलं वयमद्य भुंज्महे । खेडासत्याग्रह एव गुजरातीकृषीवलानां जागर्तेरुदयचिह्नम् । तदेवैषां राजकीयशिक्षणस्याक्षराभ्यासः ॥

डॉक्टरबेसन्टमहाशया ‘ होम रूल ’ प्रसरणं कृषीवलानस्पृशदिति सत्यम् । किंतु खेडा-सत्याग्रह एव सुशिक्षिताः सार्वजनिकसेवकाः कृषीवलानां जीवनेन संपर्कमास्थातुं शक्यमकुर्वन् । एतेनैते राष्ट्रसेवकाः स्वेषां कृषीवलानां चैक्यमशिक्षन्त । स्वकार्यस्य योग्यं क्षेत्रं तैर्लब्धम् । तेषां त्यागशक्तिरवर्धत । श्रीवल्लभभाईमहाशयोऽस्मिन्युद्धे प्रविष्ट इत्येतदेव प्रशंसनीयम् । गतवर्षे गुजरात-देशेऽतिवृष्ट्या यदानाहुतमभूत्तदा जनस्य साहाय्यकरणादस्मिन् वर्षे ‘ बारडोली ’ सत्याग्रहा-चरणाच्च तस्य प्रमाणमस्माकं विदितमासीत् । गुजरातीजनजीवने नूतना कला वीर्यं च पूर्णमासीत् ।

तत्रत्यकृषीवलस्याविस्मर्यस्वशक्तेर्ज्ञानमुत्पन्नं स्वस्य मुक्तिः स्वहस्ते स्थिता । अपि यत् मुक्तिः स्वीयसहनशक्तिं त्यागशक्तिं चानुरुध्य वर्तत इति पाठो मनस्यप्रमृज्यरीत्या लग्नोऽभूत् । ‘ खेडा ’कलहद्वारा सत्याग्रहो गुजरातीभूतले दृढमूलः स्थितः ॥

एवं मम सत्याग्रहपरिसमाप्तौ संतोषमनुभवितुं यद्यपि न किंचिद्दृष्टं तथापि खेडाकृषीवला अत्युत्साहं प्रापुर्यतः स्वप्रयत्नयोग्यफलं लब्धमिति तेषां विदितम् । अपि च दुःखनिवारणाय सत्यं रामबाणसदृशं मार्गमवालोकयन् । तेषामुत्साहस्यैतद्ज्ञानं पर्याप्तं कारणमासीत् ॥

तथापि खेडाकृषीवलाः सत्याग्रहस्यान्तर्यस्वरूपं नाजानन् । अस्य कटुरनुभवः पश्चात्तेषा-मभूत् । एतदग्रतनाध्याये विवरिष्यते ॥

षड्विंशोऽध्यायः

# ऐक्यार्थे प्रबलापेक्षा

खेडासत्याग्रहारंभे यूरोपखंडस्य भयंकरः संग्रामः प्रवर्तते स्म । राजप्रतिनिधिर्दिल्लीपत्तने युद्धसभां विधाय तदर्थेऽनेकानग्रेसरानाह्वयत । अहमपि तां सभां गन्तुं निर्बद्धः । पूर्वमेव निवेदितो मया राजप्रतिनिधिना लॉर्डचेम्सफर्डमहाशयेन सह मम स्नेहसंबन्धः ॥

आमंत्रणं स्वीकृत्याहं दिल्लीपत्तनं गतः । तथापि सभां प्रवेष्टुमासन्नन्तरायाः । 'अली'सहोदरयोरनाह्वानं सभायास्तत्र मुख्यस्य । तौ तदा कारागृह आस्ताम् । यद्यपि तद्विषयो मयाधिकं श्रुतस्तथाप्येकद्विवारमात्रं तयोर्दर्शनमासीत् । प्रत्येकोऽपि तयो राष्ट्रसेवां धैर्यं च प्रस्तौति स्म । मम 'हकीमसाहेब'महाशयस्य निकटपरिचयस्तदानीं न संबभूव । स्व.आचार्यरुद्रमहाशयो दीनबंधु-अँड्रुझमहाशयश्च तयोर्महतीं प्रशंसामकुरुताम् । कलकत्तापत्तने प्रवृत्तायां मुसलमानानां महासभायामहं श्वेबकुरेशीमहाशयं न्यायवादीख्वाजामहाशयं चादर्शम् । डॉ.अनसारी–डॉ. अबदुरहेमान–महाशयाभ्यां मया परिचयः कृत आसीत् । मया मुसलमानसज्जनानां मैत्री अन्विष्यते स्म । एतेषां संपर्कद्वारा मुसलमानजनानां चित्तं ग्रहीतुं मम तीव्रेच्छासीत् । अतस्तैः सह गाढसंबन्धं कर्तुं यत्रकुत्रापि तैराहूतेन मया गम्यते स्म । मयि निर्बंधोऽनावश्यक आसीत् ॥

हिन्दुमुसलमानजनानां सत्सौहार्दं नासीदिति मम दक्षिणाफ्रिकायां स्वल्पेनैव कालेन विदितमासीत् । ऐक्यमार्गे स्थितानन्तरायान् निर्मूलयितुमवकाशे सति तादृगवकाशो मया न परिहीयते स्म । यस्य कस्यापि स्तुत्या अथवा स्वगौरवहान्येतरांस्तोषयितुं मम स्वभावे नासीत् । किन्तु ममाहिंसातत्त्वस्य हिंदुमुसलमानजनानामेकताप्रश्न एवातिकठिना सूर्मी भविष्यति । अहिंसाप्रयोगानां तदेव विशालक्षेत्रमिति दक्षिणाफ्रिकायां ममानुभवैर्मनसो दृढमासीत् । अद्याप्यहं तथैव मन्ये । भगवान् मां परीक्षत इति मम जीवनस्य प्रतिक्षणं विज्ञायते ॥

यदाहं दक्षिणाफ्रिकायाः प्रतिनिवृत्तस्तदेदृशदृढाभिप्रायवानासम् । अतः 'अली'भ्रात्रोः संबन्धममूल्यमगणयम् । तथापीतोऽप्यधिकमैत्र्याः संभावनात् पूर्वमेव राजकीयास्तौ जनसंपर्काद्दूरीचक्रतुः । मौलानामहमदलीमहाशयः कारागृहाधिकारिणामनुज्ञां प्राप्य मम 'बेतुल'कारागृहात् 'छिंदवाडा'कारागृहाच्च पत्राणि दीर्घाणि लिखति स्म । 'अली'सहोदरौ द्रष्टुमहं राज्याधिकारमनुज्ञां प्रार्थयम् । किन्तु तन्निष्फलमभूत् ॥

अनयोः सहोदरयोर्बंधनादनंतरं कलकत्तायां मिलिते 'मुस्लिमलीग' अधिनिवेशने मुसलमानमित्राणि मामाह्वयन्त । भाषणं कर्तुमहं प्रार्थितः सन् कारागृहाद् 'अली'भ्रात्रोर्विमोचन-

कर्तव्यमधिकृत्य भाषणमकरवम् । ततः स्वल्पकालेनैतानि मित्राणि मामलिगढपत्तनस्य मुस्लिम्-विद्याशालां प्रति निन्युः । तत्रत्यं युवकानामहं देशसेवाप्रवृत्तैः " फकीरैः" युष्माभिर्भवितव्य-मित्याह्वानमदाम् ॥

अनन्तरं 'अली' भ्रात्रोर्बंधविमोचनाय राज्याधिकारे पत्रव्यवहारमकरवम् । अहं 'खिलाफत' विषयेऽस्मिन्संबन्धे 'अली' भ्रात्रोरभिप्रायान् प्रवर्तितकार्याणि च परामृष्टवान् । मुसलमानमित्रैः सह बहुशस्तां चर्चामकार्षम् । यद्यहं मुसलमानजनानां वस्तुतः सुहृद् भवेयं तथा 'अली' भ्रात्रोर्विमोच-नाय 'खिलाफत' समस्यां न्यायेन पूरयितुं च साध्यं सर्वसाहाय्यं मया करणीयमिति मम प्रत्यभात् । तत्प्रार्थनायां नीतिविरुद्धं किमपि न चेदस्ति तावतालम् । तत्प्रश्नस्य स्वतंत्रगुणदोषाणां गणना मम कार्यं न हि । धर्मसंबद्धविषयेषु भिन्नाः सन्ति विश्वासाः । प्रत्येकपुरुषस्यापि स्वीयविश्वास एव परमोत्तमः । प्रत्येकस्मिन्धार्मिकविषये सर्वेषामेक एव विश्वासश्चेत्सर्वस्मिञ्जगत्येक एव धर्मः स्थितो भवेत् । दिनेषु गच्छत्सु मुसलमानजनानां 'खिलाफत' संबंधे या प्रार्थना सा नीतिनियमविरुद्धा न भवति । अपि च न्याय्यं भवतीति आंग्लप्रधानमंत्रीलॉइडज्यॉर्जमहाशयः संमतिमदादिति मम ज्ञातमासीत् । ततः प्रधानमंत्रिणा दत्तवचनं यथासौ निर्वाहयति तथा कर्तुं यथाशक्ति साहाय्यकरणं मम कर्तव्यमिति मम प्रत्यभात् । तेन दत्तं वचनं कियत्स्पष्टमासी-दिति चेन्मुसलमानजनप्रार्थनाया गुणदोषविमर्शः केवलं ममान्तरात्मनस्तृप्तये भवति ॥

मित्रैर्विमर्शकैश्च 'खिलाफत' प्रश्नविषये मम वर्तनं खंडितम् । तथापि ममाभिप्रायान् परिवर्तयितुं मुसलमानजनैः सहकारेण विषादं प्राप्तुं वा मम न किंचित्कारणमस्तीति प्रतिभाति । तादृक्संदर्भस्य पुनः प्राप्तौ मम वर्तनं पूर्ववदेव तिष्ठेदिति ॥

अतो दिल्हीं गतेन मया मुसलमानजनानां पक्षो राजप्रतिनिधेरवधानाय नेतव्य इति मम पूर्ण उद्देश आसीत् । 'खिलाफत' प्रश्नः पश्चाल्लुब्धरूपो न तदाद्यापि प्राप्त आसीत् ॥

किन्तु दिल्हीं प्राप्ते मयि मम युद्धसभायां भागीभवनविषयेऽन्योऽन्तरायः आसीत् । दीनबंधु-अँड्रुझमहाशयः युद्धसभायां मम प्रवेशो नीतिविरुद्धः खल्विति प्रश्नमुपास्थापयत् । 'इंग्लेंडइटली' देश-योर्मध्ये प्रवृत्तगुप्तनियमानधिकृत्यांग्लपत्रिकासु चर्च्यमानं विषयं मे न्यवेदयत् । 'इंग्लेंड' देशे इतर 'ऐरोप्य' राज्याधिकारेण गुप्तसंधीनकरोद्यदि मयास्यां सभायां भागिना भवितव्यं कथमिति अँड्रुझमहाशयः पप्रच्छ । अतः सभागमने मम संकोचं विवृत्याहं लॉर्डचेम्सफर्डमहाशयानां पत्रमलिखम् । स तं प्रश्नमात्मना सह चर्चयितुं ममाह्वानं ददौ । तेनापि च तस्याप्त-कार्यदर्शिना मेफीमहाशयेन सह दीर्घकालमहमचर्चयम् । सभामागन्तुं मम संमतिरेवास्य फलितमासीत् । राजप्रतिनिधेर्वाद एवं स्थित इति वक्तव्यः—यथा यद् 'ब्रिटिश' मंत्रिणां कूटे न क्रियते तत्सर्वं राजप्रतिनिधिर्जानातीति भवता नावगतं खलु । 'ब्रिटिश' राज्याधिकारो न कदापि प्रमाद्यतीत्यहं वेतरे वा न ब्रूमः । किंतु चक्राधिपत्येन

समष्ट्या सदैव कृतमिति यदि भवान् संमन्यते ' ब्रिटिश 'संबंधेन हिंदुस्थानस्य लाभ एवासी-दिति भवता विश्वस्यते चेत् संकटे निपतिते साम्राज्ये तस्य साहाय्यं कर्तुं प्रत्येकभारतीयस्य कर्तव्यमिति किं भवता न संमन्यते । आंग्लपत्रिकाभिर्गुप्तानियमानधिकृत्य यल्लिखितं तन्मयापि पठितम् । तन्मुक्त्वा एतद्विषये न किंचिन्मया ज्ञायत इतीमाः पत्रिका बहुवारमसत्यवार्ताः स्फोटयन्तीति भवता ज्ञायत एव । साम्राज्यस्यैतादृक्कष्टकाले प्राप्ते केवलवृत्तपत्रिकावृत्तांतस्याधा-रेण साहाय्यं न दास्यामीति किं ब्रूत । युद्धसमाप्तौ भवदिष्टप्रकारेण नैतिकप्रश्नानादायास्मान्य-थेच्छं खंडयत । किंत्वद्य मास्तु ॥

एवंविधो वादो न हि नूतनः । किन्तु तद्वचनविधया तत्संदर्भस्य महिम्ना च स मे नूतन इव प्रत्यभात् । अहं सभायां भागी भवितुं संमतिमदाम् । मुसलमानप्रार्थनाविषये राजप्रतिनिधिं प्रति पत्रं लेखिताभवम् ॥

सप्तविंशोऽध्यायः

# सैनिकानां प्रवेशः

**एवमहं** युद्धसभां गतः । सैनिकानां संग्रहविषयो निर्णयो मयानुमोदितव्य इत्यतीवोत्सुक 'आसी-द्राजप्रतिनिधिः । अहं हिंदी-हिंदुस्तानीभाषायां वक्तुमनुज्ञां प्रार्थयम् । राजप्रतिनिधिरस्य संमेने । किंत्वांग्लभाषायामपि वक्तव्यमित्यसूचयत् । मम वक्तव्यं भाषणं नासीत् । मया एकमेव वाक्यमुच्चारितम् । तस्य तात्पर्यं यथा मम पर्यनुयोज्यतामवगत्य निर्णयमेतमनुमोद इति ॥

हिंदुस्तानीभाषायामुक्तमाकर्ण्य बहवो मामभ्यनंदन् । तादृशसभायां हिंदुस्तानीभाषायां यस्य कस्यापि भाषणं जीवत्स्मृतावयमेव प्रथमो वार इति तैरुक्तम् । एतान्यभिनंदनान्यपि च हिंदुस्तानी-भाषायां भाषणकृदहमेक एवेति ज्ञानं च मम राष्ट्रियमात्मगौरवं भंक्त्वा मम हृदयं दुःखितमकुर्वन् । अहं भूगर्भमवतीर्य निगूढो भवेयमित्यमंसि । अस्मद्देशकार्यसंबद्धास्वस्मद्देश एव मिलितासु सभास्वस्मद्देशभाषाया बहिष्कारः । मादृशो यः कश्चित् हिंन्दुस्तानीभाषायां भाषते चेत् सोऽभिनन्दनयोग्यो विषयः । कीदृशीयं विषादकरी वाक् । एतादृग्घटना वयं कियत्क्षीणदशा-मवतीर्णा इति स्मारयन्ति ॥

सभायां मयोक्तमेकं वाक्यं मम बह्वर्थगर्भितमासीत् । सभा वा मयानुमोदितप्रस्तावो वा मया न विस्मरणीयोऽभवत् । दिल्हीस्थेनैव मया पूरणीया पर्यनुयोज्यतैकासीत् । मया राजप्रतिनिधेः पत्रं लेखनीयमासीत् । एष मे न सुलभो विषयः । अहं सभां प्रविष्टः कथं किमर्थं चेति विवृत्य राज्याधिकाराजनैर्निरीक्षितं किमित्येतत्स्पष्टं निवेद्य पत्रलेखनं राज्याधिकारस्यापि च प्रजानां लाभाय मम कर्तव्यमिति मम प्रत्यभात् ॥

अस्मिन् पत्रे लोकमान्य तिलक-'आली' सहोदरप्रभृतीनां नायकानामेनां सभां प्रत्यनाह्वानकृते मम विषादो राजकीयसंबंधे लोकानां संमतिप्राप्तये राजकीयैः कनिष्ठपक्षे कर्तव्याः सुधारणा युद्धात्संवृत्तपरिस्थितेर्विषये मुसलमानजनैः प्रार्थितं च व्यक्तमकार्षम् । तत्प्रकटनाय राजप्रतिनिधेरनुज्ञामपेक्षितामसौ संतोषेण प्रददौ ॥

सभासमाप्तेरनंतरमेव 'सिमलां'प्रति राजप्रतिनिधेर्गमनात्तत्र पत्रं प्रेषणीयमासीत् । मम दृष्ट्या तन्महत्त्वपूर्णमासीत् । प्रेषणाधिकरणात्प्रेष्यमाणे विलंबोऽभविष्यत् । कालमल्पीकर्तुमासीन्ममेच्छा । तथापि यस्य कस्यापि संदेशहारिणो वशे प्रेषयितुं न रोचते स्म । यः कोऽपि परिशुद्धहृदयस्तदादाय राजप्रतिनिधेर्भवनं स्वहस्तेनैव प्रापयेदिति ममेच्छासीत् । दीनबंधु-अँड्रुझमहाशयो मुख्याध्यापकसुशीलरुद्रमहाशयश्च 'केंब्रिज्मिशनपाद्रि' आयरलेंडमहाशयस्य नामधेयमसूचयताम् । स सज्जनः पत्रमालोक्य सदिति दृष्टे नेतुं संमेने । तदात्ममात्रपत्रं नासीदित्यतो नासीत् कोप्यंतरायः । स तत् पठितवान् । तस्मायिदमरोचत । तन्नीत्वा प्रदातुं संमेने । द्वितीयश्रेणीप्रयाणशुल्कं प्रदित्सुरहम् । तथापि तन्न गृहीत्वा मध्यमश्रेण्यां प्रयातुमभ्यासो ममेत्यब्रवीत् । तस्मिन्रात्रिप्रयाणे सत्यपि तस्यामेव श्रेण्यां प्रयातः । तस्य सरलता ऋजु स्वभावो निष्कपटा वाक् च मम मानसमाचकर्षुः । एवंरीत्या पवित्रमानससज्जनद्वाराप्रेषितपत्रेणाभीप्सितमेव फलं लब्धमिति मे प्रत्यभात् । एतेन मम मनोभारोऽवतारितः । मम मार्गः सुगमोऽभवत् ॥

योधानां संग्रहो मम द्वितीयपर्यनुयोज्यतासीत् । खेडां विना कथमन्यत्र मयारंभणीयम् । मया सह कार्यकर्तृन् विना प्रथमतो योधा भवितुं के वान्ये आह्वातव्याः । तस्मात् 'नडियाद'पत्तनं प्राप्य वल्लभभाईप्रभृतिमित्रैः सहैतद्विषयं चर्चितवान् । तेषां कतिपयैरियं गुलिका सौलभ्येन निगरितुमशक्या भवति । अंगीकृतमदीयसूचनास्तस्य फलकारित्वविषये संशयग्रस्ता बभूवुः । अहं येषां पार्श्वं गत्वा सैन्यं प्रवेष्टव्यमिति प्रष्टुमीप्सितवांस्तेषां राज्याधिकारस्यापि मध्ये प्रेमोत्सेको नासीत् । राजकीयसेवकानां संबंधे तैरनुभूतः कटुरनुभवस्तत्स्मृतावद्यापि नूतनः स्थितः ॥

तथापि ते कार्यारंभपक्षेऽभिमता आसन् । आरब्धे मया कार्ये ममांधत्वं गतम् । ममाशाप्रवाहस्याकस्मादंतरायोऽभूत् । 'खेडा' सत्याग्रहकाले जनाः स्वशकटं भाटकं विना प्रयच्छन्ति स्म । इदानीं पुनः स्वयंसेवकानां वाक् तिष्ठतु । भाटकस्यापि शकटं दुर्लभमासीत् । शकटानि विहाय पादक्रमणेन् प्रयातव्यमिति निरचैष्म । एवं दिनस्य विंशतियोजनदूरं गंतव्यमासीच्छकटानामप्यलाभे जना आहारं प्रयच्छन्तीति निरीक्षणं कथं स्यात् । आहाराय प्रार्थनाप्यनुचितेति वक्तुमशक्यमासीत् । निश्चितं च स्वयंसेवकैः प्रत्येकेनापि स्वकीयमाहारं स्वयमेव कोशे स्थापयित्वा प्रयातव्यमिति निर्धारितम् । तदोष्णकाल इति शयनं वा निशारो वा नावश्यकमासीत् ॥

यत्र यत्र वयं गतास्तत्र तत्र सभा आकारिताः । जनास्तावदायान्ति स्म । परंत्वेकद्विपुरुषा अपि सैन्यं प्रवेष्टुमग्रे नायाताः । भवानहिंसोपासकस्तथापि शस्त्रास्त्रग्रहणं कथं ब्रवीति । वयं

राज्याधिकारस्य साहाय्यकर्तारश्चेत्तेन को वोपकारः कृतोऽस्माकम् । इमान् प्रश्नान् तथाविधानन्यानपि पृच्छन्ति स्म ॥

तथाप्यस्मन्निरंतरोद्यमः फलकारी भवितुं प्रवृत्तः । बहवो जनाः स्वनामानि प्रददुः । प्रथम-समूहस्य प्रेषणात्परमवशिष्टान् गणान् प्रेषयितुं साध्यं भविष्यतीत्यस्माभिर्निरीक्षितम् । एवं नूतन-प्रविष्टाः कुत्रावतारणीया इति विषयमधिकृत्याहं प्रांतविभागाधिकारिभिः सह पूर्वमेव वाग्व्यवहारं कुर्वन्नासम् । प्रत्येकप्रांतविभागाधिकारिणः ( कमिशनर् ) दिल्हीसभावत् सभाश्चालयन्ति स्म । एतादृगेव गुजरातीदेशे मिलिता । अहं मम सहवासिनश्च तत्राहूताः । वयं तत्र गताः । परंतु मद्वर्तनस्यौचित्यं दिल्हीसभापेक्षयात्राल्पीयस्तरमिति प्रत्यभात् । नीचदासत्वरूपवातावरणे नाहं सुखित आसम् । अहं स्वल्पदीर्घं भाषणमकार्षम् । मम भाषणेऽधिकारिणां रुचिकरं न किंचिदुक्तम् । तावदेव न । एकद्विकठिणवाचोऽप्यासन् ॥

सैन्यं प्रवेष्टव्यमिति जनं प्रार्थयितुं मया 'चीटयः' प्रदीयन्ते स्म । तेषां मयोपयुक्त एको वादः कमिशनर्अधिकारिणेऽरुचिकरमासीत् । तद्यथा भरतखंडस्य शासने 'ब्रिटिश'जनैः कृतेष्वकृत्येषु सर्वमपि जनीगमेव निरायुधीकरणमकृत्यमत्यंतर्हीनमिति चरित्रे परिगण्यते । एतच्छासनं निराकर्तुमस्माभिः शस्त्रविद्या शिक्षणीया यद्यद्य सुसमयः प्राप्तः । मध्यमश्रेणीजनः स्वयमग्रत आगत्य राज्याधिकारस्य संजातेऽस्मिन्नापत्काले साहाय्यं करोति चेदविश्वासो विनश्य शस्त्रधार-णान्तरायो न स्थास्यतीति ॥

प्रांतविभागाधिकारी एतदधिकृत्य भाषित्वोभयोर्मतभेदे सत्यपि यतो भवान्सभामागतस्ततोऽहं संतुष्ट इत्युवाच । ममाभिप्राया मया यथाशक्ति विनयेनैव समर्थयितव्या एवासन् ॥

अस्ति इहाधस्ताद्राजप्रतिनिधिं प्रति लिखितं पूर्वोक्तं पत्रम् —

" यथा भवान् जानाति तथैतन्मासस्य ( एप्रिल ) पंचविंशतितारीखदिनस्य पत्रे लिखितका-रणैर्युद्धसभामहं नागत इति वक्तव्यमापतितम् । परंतु कृपया दर्शनप्रदानानंतरं यद्यपि विनान्यतः कारणात् परं भवति मम परमादरात् सभां गंतव्यमिति स्वयमेवात्मानं प्रेरयित्वा सभामागतोऽस्मि । लोकमान्य तिलक–मिसिस बेसंट-आलिभ्रातरौ ( एते प्रजाभिमतनायकेष्वत्यंतप्रमुखा इति मे मतम् । ) सभां प्रति नाह्वानिता इत्यप्येकं कारणम् । तेषामनाह्वानमत्यगाधः प्रमाद इतीदानीमप्यहं गणयामि । एतत्सभानंतरं प्रांतेष्वपि सभा मिलिष्यन्तीति मया ज्ञातम् । तेष्वेतान्प्रमुखानाहूय राज्याधिकारिण-स्तदाशयनाकर्ण्य लाभं प्राप्य स्वप्रमादं समीकुर्युरिति विनयपूर्वकं मया सूच्यते । एतान् कोटयंतर-प्रजानां प्रतिनिधीन्नायकान् राज्याधिकारस्यानभिमताभिप्रायग्राहिणोऽपि यः कोऽपि राज्याधिकारोऽ-नादरेण दृष्ट्वा न विजयेतेति विज्ञापयामि । परंतु सभायामुपसमितिषु सर्वे पक्षाः स्वाभिप्रायान् निरांतकं व्यक्तीकर्तुमवकाश आसीदिति वक्तुं मम संतोषो भवति । सभायां वोपसमितौ वा ममाभि-मतमुद्देशपूर्वकमेव न व्यक्तीकृतम् । सभाग्रे स्थापितनिर्णयस्यावलंबप्रदानेन सभाया उद्देशानहमत्युत्त-

मतया साधयितुं शक्यमिति मम प्रत्यभात्। अहं कमप्यंतरायं विना तथा कृतवान्। एतेन सह प्रेषिते प्रत्येकपत्रे निवेदितसूचनां राज्याधिकारिणः शीघ्रमेव स्वीकुर्वन्ति चेत्तथा शीघ्रमेव कार्यरूपं नेतुं शक्यत इत्याशां बिभर्मि ॥

इतः किंचित्कालेनैव वयमितरस्वास्थ्यानीव 'ब्रिटिश'चक्राधिपत्यस्य स्वतंत्रभागिनो भविष्याम इत्याशयं रक्षामः। यदा चक्राधिपत्यस्य संकटमागतं तदा निर्मत्सरेण निरांतकेन च साहाय्य-प्रदानमस्माकं धर्म इति मम संमतिरस्ति। तथावलंबो दातव्य इति निश्चितमद्यास्माभिः। किंत्वस्मद-भीष्टमितरेषामिव त्वरितमेव सेत्स्यतीति निरीक्षणमेवैतस्याः प्रवृत्तेः कारणमिति केवलं सत्यमेव। अतः कर्तव्यस्याचरणं स्वयमेतदुचितमधिकारं संपादयिष्यतीति यथैतदंतरे भविष्यन्तीति. भवदीय-भाषणे सूचितराजकीयसुधारणा राष्ट्रमहासभापि च मुसलमानमहासभाभ्यां मिलित्वा रचित-निर्वहणक्रमं स्थूलतयानुसरन्तीति जनस्य निरीक्षणं न्याय्यमेव भवति। युद्धसभायां बहवः सदस्या आत्महृदयपूर्वकं सहकारं प्रदातुमियं श्रद्धाधारभूता भवतीति मे विश्वासः ॥

अस्मद्देशीयो जनो यथा पदं पश्चान्निधत्ते तथा कर्तुमहं शक्तश्चेन्महासभाया निर्णयान-खिलान्परावर्त्य युद्धसमाप्तिपर्यंतं स्वराज्यमथवा 'प्रजाप्रतिनिध्यमिति नोच्चारणीयं यथा तथाकरिष्यम्। साम्राज्यस्यैतद्विषमघटीप्राप्तौ भरतखंडं स्वीयसुदृढयुवकान् सर्वानपि साम्राज्यस्य कृते आहुतीकर्तुं यथा शक्यं तथा कर्तव्यम्। अनेन कार्येणैकेनैव हिंदुस्थानं चक्राधिपत्ये सर्वत्राप्यत्यंतादरपात्रमङ्गं भूत्वा वर्णभेदः कुलभेदश्च प्रणष्टोऽभविष्यदिति मे विदितम्। किन्तु प्रायो भारतस्य जनाः सर्वेऽपीतोऽप्यल्पपरिणामं मार्गमनुसर्तुं निश्चिता भवन्ति। अपि च शिक्षितवर्गो जनसमाजस्योपरि प्रभावशाली न भवतीत्यद्य वक्तुं न शक्यम्। दक्षिणाफ्रिकातो हिंदुस्थानं निवर्तनादनंतरं मम कृषीवलैः सहात्यंतगाढसंपर्को भवति। तेषु राज्याभिलाषो विशेषतः प्रसृत इत्यहं सावधारणं ब्रवीमि। पूर्वं महासभाया मेळने शासनेन निर्धारणपूर्वकं निश्चितावध्यंतरे 'ब्रिटिश'हिंदुस्थानस्य प्रजाप्रतिनिध्यं प्रदेयमिति निर्णयस्याहमपि भागी संवृत्तः। एतत्कार्यं महाधैर्यापेक्षमिति मम संमति-रस्ति। किंतु शीघ्रमेव प्राप्तव्य स्वराज्यसंबंधिप्रेक्षणापेक्षयाल्पतरेणान्येन केनापि भरतखंडस्य प्रजा न तृप्यन्तीति मया सम्यगवगतम्। एतद्ध्येयसाधनाय न काप्याहुतिरधिका भवतीति मन्यमानानेके भारते विद्यन्त इति मम विदितम्। यस्मिन् साम्राज्ये स्वीयोऽत्युत्त्वदशारोढव्येति इच्छामाशां च निक्षिप्त-वंतस्तदर्थं स्वयमेवात्मानमर्पयितुं सज्जस्थितैर्भवितव्यमित्यवगंतुं पर्याप्ता जागर्तिस्तेषां विद्यते। अत एतच्चक्राधिपत्यस्य प्राप्तमपायं दूरीकर्तुं निःशब्दं निराडंबरं च कायेन वाचा मनसापि कार्यानु-ष्ठानादस्मदीयलक्ष्यस्य निकटं वेगेन गमनं विना नान्यत्। एतत्सुलभसत्यं न लक्ष्यते चेद्राष्ट्रीयात्म-हत्या भविष्यति। साम्राज्यस्य रक्षणप्रयत्ने वयं भागिनश्चेत्तस्मिन्कार्य एव स्वराज्यं साधितमित्यस्मा-भिर्ज्ञातव्यम् ॥

अतोऽस्मासु लभ्यं प्रत्येकं पुरुषे साम्राज्यरक्षणार्थमर्पयितुं संमतिर्देयेति मम स्पष्टमस्ति। किंत्वार्थिकसाहाय्यविषये तदैव वचनं वक्तुं न शक्यम्। भरतखंडेन साम्राज्यस्य कोशे मम योग्यतामतिक्रम्य धनं प्रदत्तमिति मम कृषीवलैः सह संवृत्तनिकटसंपर्केणावगतम्। एवमुक्त्वाहं मम देशबांधवेष्वधिकभागवासिनामभिप्रायं व्यक्तीकुर्वतास्मीति मम विदितम्॥

सर्वेषामस्माकमाशयं साधयितुं वयमस्मज्जीवनस्य विनियोजनेनैषा सभा पदमेकं भवतीति मम मतम्। इतरे बहवोऽस्माकं तथैव भावयन्तीति मे विश्वासः। किंत्वस्मदीया परिस्थितिरति-विचित्रा। अद्य वयं चक्राधिपत्ये स्थिताः स्मः। किंत्वस्माकं तत्रभागिनामधिकारो न विद्यते। अग्रेऽपि परिस्थितिरुत्तमा भवेदित्याशामवलंब्य वयमस्मज्जीवनमेवं विनियुंज्महे। साशा कीदृशीति स्पष्टमेतन्नकिंचिन्निगूह्य युष्माकं निवेद्यते। न चेदहं युष्माकं मम देशस्यापि द्रोही भवेयम्। साशा सिध्यत्विति वयं युष्माभिः संमतिपत्रं नापेक्षामहे। किंत्वाशाभंगे सति तेन सामाज्यभ्रमोऽपि नश्यतीति युष्माभिरवगंतव्यम्॥

विषयमेकमनिवेद्य मया न स्थेयम्। अस्माकमंतर्भेदा विस्मर्तव्या इति युष्माभिरुक्तं खलु। राज्याधिकारिणामत्याचरणं निरंकुशवर्तनं च सोढ्वा स्थातव्यमित्येतदेव तदर्थश्चेदहं युष्मदिच्छा-मनुसर्तुं न शक्तः। सुसंघटितं निरंकुशप्रवर्तनं प्रत्यास्थातुं मम साहसमशेषं व्ययीकरिष्यामि। नैकोऽपि मनुष्योऽनादरेण द्रष्टव्यः कालांतरापेक्षयातिशयितं प्रजाभिप्रायं ज्ञात्वा तदवधातव्यमित्यधिकारिणां निवे-दनीयं भवति। चंपारण्ये बहोः कालादवस्थितं निरंकुशराज्यं प्रत्ययायाहं 'ब्रिटिश' न्यायपक्षपात एव सर्वाधिकाशक्तिरिति मया प्रदर्शितम्। 'खेडा'स्थले राज्याधिकारं शपंतो जना अद्य स्वीयसत्यार्थे कष्टं सोढुं सिद्धा भवेयुश्चेत् स्वयमेव देशस्य शक्तिर्न राज्याधिकार इति ज्ञातम्। अतो राज्याधिकारं प्रति तेषां क्रोधः प्रशाम्यतीव। ते वदन्ति यथा—यदा न्याय्यं शिर उत्थापयेत् तथा सविनयेन क्रमेण प्रत्यवस्थेयम्। अतोऽनेन राज्याधिकारेण प्रजापक्षपातिना भवितव्यमिति। अनया रीत्या चंपारण्यस्य खेडास्थलस्य च समारंभा मया युद्धसंबंधे कृता स्पष्टविशिष्टप्रत्यक्षसेवा भवति। अस्मिन्विषये मम कार्यं विरमयेत्युक्तिरेका मम श्वासोच्छ्वासं विरमयेत्येका उभेऽपि समाने। पशुबलं प्रति प्रेमशक्तिर्नामांतरवत्यात्मशक्तेरुपयोगं जनेषु प्रकाशयितुं यद्यहं शक्तस्तदा प्रपंचमखिलं प्रत्यवस्थातुं समर्थभरतखण्डं युष्मदग्रे स्थापयितुं शक्नोमीति मया ज्ञायते। अत एतद्दुःखसहनस्य नित्यधर्मं मम जीवने व्यक्तीकृत्य तत्र ये सादरास्तत् स्वीकाराय तदग्रे स्थापयितुं कालोऽयमकालोऽय-मिति नियमं विहायात्मसंयममभ्यस्यामि। अन्यस्मिन् कचित्कार्येऽहं प्रवृत्तश्चेत्तदेतद्धर्मस्य सर्वश्रेष्ठतां प्रतिवादयितुमेव नान्यत्कारणाय॥

पर्यन्ते यूयं चक्रवर्तिनो मंत्रिणो मुसलमानराज्यान्यधिकृत्याभयहस्तप्रदानाय वक्तव्य-मित्यहमिच्छामि। प्रत्येकमुसलमानस्यापि विषयेऽस्मिन् गाढासक्तिरस्तीति युष्माकं विदितमेव। हिंदुर्भूत्वाप्यहं तेषां विषय औदासीन्यं न किल सहे। तेषां दुःखान्यस्मद्दुःखानि भवन्ति। तत्र

स्थानाधिकारिणां लेशतोऽपि हिंसनं यथा न भवेन्मुसलमानतीर्थक्षेत्राणां विषये तन्मनोधर्माणामादरणमपि च स्वराज्यसाधनाय हिंदुस्थानस्याधिकारविषये न्यायेन सकालं च व्यवस्थापनमेतत्कार्यक्रम एव साम्राज्यस्य क्षेमाय स्थितः। आंग्लजनांगे मम प्रेमणि स्थिते प्रत्येकभारतीये आंग्लानां विषये आदरोऽस्तु। इतीच्छयैवेदं लिखितम्॥

अष्टाविंशोऽध्यायः

# मृत्युसंमुखे

सैनिकसंग्रहणकार्येऽहं मम देहस्वास्थ्यं प्रायः संपूर्णमेव व्यनाशयम्। तत्काले मया मुख्यशः सेव्यमान आहारो यथा—भूचणकं नवनीतं जंबीरादिः। यद्यपि मया ज्ञातं नवनीतममितं भक्षयित्वारोग्यहानिः सुलभेत्यहं तदधिकमभुंजे। एतेनामशंकारब्धा। इदमहमधिकमलक्षयित्वा यदा कदाचिद्यथा मया गम्यते स्म। तथैव सायमाश्रमं गतः। तत्काले मयौषधसेवनमपूर्वमासीत्। एकवारं भोजनपरित्यागे स्वास्थ्यं भविष्यतीत्यचिंतयम्। परेद्युः प्रातर्न किंचिन्मया भुक्तम्। एतेन मम देहस्थितिरुत्तमाभूत्। किंतु संपूर्णस्वास्थ्यलाभायेतः कतिपयकालमुपवासः कार्यः। यत्किंचिद्भोक्तव्ये सति फलरसमेकं विना नान्यत् स्प्रष्टव्यमिति मे विदितम्॥

तद्दिनं किंचित्पर्वदिनमासीत्। मध्याह्ने भोक्ष्य इति कस्तुरबाईमहाशयोक्तापि सा ममाशामुपाहरत्। अहमाशाधीनः संलग्नः। अहं दुग्धनवनीतदधिसर्पिरादिभिः कृतपदार्थान्न भोक्ष्य इति संकल्पमाचरन्नासम्। अतः कस्तुरबाईमहाशया मदर्थं गोधूमयूषे मधुरान्नं कृत्वा तस्य सर्पिः प्रति तैलं निक्षिप्य संमिश्रितवती। मदर्थं मुद्गदलपायसं निचिक्षेप। एतानि मह्यमरोचन्त। कस्तुरबाईमहाशयां संतोष्य मम रुचिं च तर्पयितुं पर्याप्तमेव खादामि। एतेन मम देहस्थितेर्हानिर्न भवेदित्यहं तान्यभक्षयम्। किंतु मम दुर्दैवमेतादृक्कालमेव निरीक्षते स्म स्वल्पं मया न भुक्तम्। जठरपूर्णमभुंजे। इतो यमधर्मराजस्यैतदधिकं तांबूलप्रदानेन समाह्वानं नावश्यकमासीत्। एकहोराभ्यंतरे आमशंका तीक्ष्णादृश्यत॥

तद्दिनसायंकाल एव मया 'नडियादपत्तनं' प्रतिनिवर्तनीयमासीत्। साबरतीनामकमग्निरथविरामस्थानमर्धक्रोशमात्रदूरे स्थितमपि तत्र पादक्रमणेन बहुलः प्रयासोऽभवत्। श्रीवल्लभभाईमहाशयोऽस्माभिः सहामदाबादनगरे मिलितः। ममास्वास्थ्यं तेन ज्ञातमासीत्। किंतु मम वेदना कियदसह्याभूदिति तस्य नाहमदर्शयम्॥

वयं 'नडियाद'पत्तनं दशहोरावादनसमये प्राप्ताः। तत्रत्यं 'हिंदु'अनाथाश्रममस्मत्केन्द्रं कृतमासीत्। तदग्निरथविरामस्थानादर्धक्रोशादूरे स्थितम्। अहं कथंचित्तत्र गत्वा प्राप्तः।

किंत्वंतर्वेदना वर्धमानाभूत् । पंचदशनिमेषैरेकवारं मलं विसर्जनीयमासीत् । पर्यंतेऽहमायस्तोऽभवम् । मयानुभूयमानक्रूरवेदनां मित्रेभ्यो निवेद्याहं शयने पतितः । तावत्पर्यंतं मया सर्वैरुपयुज्यमानं शौचकूपं गम्यते स्म । अयं दूरे स्थितः । मम पार्श्वे मलोच्चारः (' कमोट ') आनेतव्य इत्यहमब्रवम् । एतत्प्रष्टुमहं लज्जितोऽप्युपायांतरं नासीत् । श्रीफूलचंदबापुजीमहाशयः प्रधावितो मलोच्चारमेकमानिनाय । सुहृदः सर्वे चिंताक्रान्ता मां परितः स्थिताः । तैर्ममोपरि प्रसारितप्रेमधाराया अवेक्षमाणजागर्तैश्च नांतमासीत् । किन्तु तैर्मम वेदनां परिहर्तुं न शक्यम् । तेषां निःसहायतां मम हठोऽत्रर्धयत् । वैद्यानां साहाय्यं मा भूत् । अहमौषधं न ग्रहीष्ये । मया कृतप्रमादस्य प्रायश्चित्तमनुभवितुं वरम् । इत्थं मयि हठवादिनि निरुपायाः पश्यंतस्तस्थुः । तस्मिन्नचतुर्विंशतिहोरामितकाले त्रिंशद्वारं चत्वारिंशद्वारं वा मलेनोच्चरितेन भवितव्यम् । अहमुपवासमकार्षम् । प्रथमतः फलरसोऽपि न गृहीतः । बुभुक्षा संपूर्णमेव निवृत्ता । तावत्पर्यंतं मया मम शरीरं वज्रमिव दृढं भवतीत्यवगतम् । किंतु तदेवाद्य मृत्तिकापिंडमिवास्तीति मया दृष्टम् । तस्य सहनशक्तिरेव विनष्टासीत् । डॉ.कानूगामहाशय आगत्यौषधं सेव्यतामिति बहुधाब्रवीत् । मया संमतिर्न दत्ता । 'इंजेक्शन' करोमीत्युवाच । तदपि मे न संमतम् । तत्कालं 'इंजेक्शन'-विषये ममाज्ञानं केवलं हास्यजनकमासीत् । 'इंजेक्शन' अंतः यस्य कस्यापि प्राणिनो दुग्धेन भवितव्यमिति मया चिंतितमासीत् । अनेन वैद्येन सूचिते 'इंजेक्शन' अंतः केवलं वृक्षनलिकाभिः सिद्धपदार्थ उपयोजयिष्यते स्मेति मया पश्चादवगतम् । परंत्वेतत्कालं तस्योपयोगायातीवविलंबः संवृत्तः । विरेचनं न व्यरमत् । एतेन मम केवलं निःशक्तिरुदभूत् । फलितं संनिपातज्वरः । मम सुहृदो भीताः । अन्ये केचिद्वैद्यानानिन्युः । किंत्वविधेयं रोगिणं प्राप्य किं वा कुर्यात् ॥

शेठअंबालालमहाशयस्तस्य भार्या च नडियादपत्तनमागत्य मम सहवासिभिरालोच्य महता जागरेण मां 'मिरजापुर'स्थितस्वीय'बंगलो'मंदिरं प्रापयामास । अस्यां रुग्णावस्थायां मम कृतसेवापेक्षयाधिकनिर्मलनिष्कामप्रेमपूरितशुश्रूषालाभो न कस्यापि साध्य आसीत् । किंत्वेकविधः स्वल्पज्वरो विरामं विना मम शरीरं कृशयन्नासीत् । चिरकालस्थायीदं जाड्यं कदाचिन्मरणांतं मां गमयेदिति प्रत्यभात् । शेठअंबालालमहाशयगृहे वर्षत्प्रेमादराणामपरिमितावपि मम मनस्यशांतिरुद्भूय मामाश्रमं प्रापयतेति तं निरबध्नाम् । ममाग्रहेणायं वशीकृतो मां तत्र निनाय ॥

यदाहमाश्रमे बाधया शयने लुठन्नासं तदा श्रीवल्लभभाईमहाशयो 'जर्मनी'देशः संपूर्णमेव पराजित इति वर्तमानमानिनाय । इतःपरं सैनिकसंग्रहो निवृत्त इति प्रांताधिकार्युक्तवानिति संदेशं मह्यं न्यवेदयत् । इतः परं योधसंग्रहो निवृत्त इति वृत्तांतो मम मनसो भारं बहुधावातारयत् ॥

अहमिदानीं जलचिकित्साप्रयोगं कुर्वन्नासम् । एतेन मम किंचिदुत्तमं संजातम् । तथापि शरीरदार्ढ्यं पुनः संपादयितुं कष्टसाध्यमासीत् । बहवो वैद्याः निःसंख्यानभिप्रायान् ददुः । किंतु न किंचिदप्यंगीकर्तुं मनसः संमतमासीत् । द्वाभ्यां त्रिभ्यां मया दुग्धस्याप्रतिग्रहणस्य प्रतिज्ञातत्वान्मां-

सस्य सारः सेवनीय इति सूचितम् । एतदाधारतयायुर्वेदग्रंथगताः श्लोकाः पठिताः । तेषामेकः कुक्कुट्यंडानि भक्षणीयानीति बहुशोऽब्रवीत् । किंतु सर्वेषामेषां प्रत्युत्तरमेकमेवासीन्नेति ॥

मयैतद्भोक्तव्यमेतन्न भोक्तव्यमिति विचारः शास्त्रप्रमाणेन निर्धारणीयो नासीत् । मम जीवन-पथनिर्णायका नियमा बाह्यप्रमाणं नावलंबन्ते । अयं खाद्याखाद्यप्रश्नो मम जीवनपथेन मिलित आसीत् । ममांतरात्मनः प्रेरणां त्यक्त्वापि जीवितुमिच्छा मम नासीत् । मम भार्यापत्यमित्राणामुपरि नियममेकं निर्दाक्षिण्येन निक्षिप्य स्वयमेव तन्नियमधिक्कारः कथम् ॥

एवं रोगश्चिरकालमस्थात् । मम जीवन एष एव बहुदिनानि रोगेणार्तनादं कुर्वतो मम प्रथमो वारः । मम नियमान्परामृश्य परीक्षितुमनन्यमवकाशमकल्पयत् । एकस्यां रात्रावहं नैराश्येन गिलितोऽभवम् । अहं मृत्युसंमुखं स्थित इति मम प्रत्यभात् । तदा श्रीअनसूयाबाईमहाशया आह्वानिता । साश्रममागता । वल्लभभाईमहाशयो डॉ. कानूगामहाशयेन सहागतः । वैद्यो नाडीं दृष्ट्वा भवतो नाडी यथास्थिता भवति । चिंताया नास्त्यवकाशः । एतदत्यंतनिःशक्त्या प्राप्तमधैर्यमेव । नान्यत् किंचिदित्यब्रवीत् । किंत्वेतेन मम मनःशांतिर्नासीत् । तां रात्रिं निद्रां विनायापयम् ॥

प्रातःकाल आगतः । न तु प्राणा गताः । किंत्वंतः समीपमागत इति भावनां प्रहृत्य पलायनं कारयितुं न शक्यमासीत् । अतो यदा यदाहमुत्थितस्तदा तदा गीतापठनश्रवणेन कालो याप्यते स्म । अहं पठितुमशक्तः । भाषितुं नासीदिच्छा । अल्पस्वल्पभाषणेनापि मस्तिष्कं बाध्यते स्म । जीवन उत्साह एव नष्टः । केवलं श्वासोच्छ्वासेन जीवतीति प्रदर्शनं मम नेष्टम् । एवं न किंचित्कुर्वन्मित्राणां सहवासिनां च सेवां स्वीकुर्वाणः शरीरं शनैः शनैर्जीर्यदवलोकयन्निःसहायतया यज्जीवनं तत्तीव्रवेदनाजनकमासीत् ॥

मरणं केनचित्कालेनायास्यतीति निरीक्षमाणः शयितोऽहं यदा तदा डॉ. तलवलकरमहाशय किंचिद्विचित्रप्राणिनं सहानीयागतः । असौ महाराष्ट्रीयः । नायं प्रसिद्धः पुरुषः । किंतु तद्दर्शन-मात्रेण सोऽप्यहमिव कश्चिदुन्मत्त इति दृष्टवान् । अयं स्वीयचिकित्सां ममोपरि प्रयोक्तुमागतः । असौ 'ग्रान्ट' वैद्यशालायां पाठक्रमं प्रायः समापितवान् । परंतूपाधिर्न गृहीतः । असौ ब्रह्मसमाजे प्रविष्ट इति पश्चादवगतम् । केलकरमहाशय इति तस्य नामातिस्वतंत्रवृत्तिर्हठवादी च । प्रत्येकमसौ स्वीयहिमपिंडशुश्रूषामग्रे स्थापयति । 'हिमपिंड' वैद्य इति तस्य नामास्माभिरवगतम् । सुशिक्षित-वैद्यैरनालोकिताः कतिपयविषया आत्मनोपलब्धा इत्यस्ति दृढो विश्वासस्तस्य । तं विश्वासं मय्यपि रूढमूलं कर्तुमसौ न शक्त इत्येष उभयोर्दूरदृष्टविषयः । एकावधिपर्यंतं मम तच्चिकित्साक्रमेस्ति विश्वासः । किंतु कतिपयविषयाणां निर्धारेऽसावत्यातुरः प्रवृत्त इति मम शंका ॥

तेन परिशीलितविषयाणां गुणागुणास्तिष्ठन्तु नाम । स्वीयप्रयोगं मम शरीरोपरिकर्तुमवकाश-मदाम् । बाह्यचिकित्सा मया नावहिता । शरीरस्योपरि सर्वतो हिमपिंडबंधनं सा तस्य चिकित्सा । स्वप्रयोगेण मम शरीरस्योपरि संजातः परिणाम इति सर्वं यद्यपि न संमतं तेन मयि नूतनाशांकुरिता

नवचैतन्यमप्युदियायेति मया संमंतव्यम्। प्रकृत्या मनसि जनितपरिवर्तनं न शरीरस्थितिः परिवर्तिता। मम बुभुक्षोत्पन्ना। पंच वा दश वा निमेषाच्छनैः शनैः परिक्रमितुं प्रवृत्तः। स इदानीं ममाहारे 'परिवृत्तिमसूचयत्। यथा भवतामान्यंडानि यदि सेव्यन्ते तदा तव देहस्याधिकपुष्टिर्जायते। ततो देहस्येतोऽपि शीघ्रं शक्तिरायाति। अंडमपि, दुग्धवन्निर्दोषः पदार्थः। इदं मांसं न भवति। सर्वांडेभ्योऽपत्यानि न निर्गच्छन्तीति भवता किं न ज्ञातम्। एतादृङ्निर्बीजान्यंडानि पण्यवीथीषु लभ्यंत इति॥

अहमीदृगंडान्यपि भक्षयितुं न सज्जस्थितः। किन्तु मम सार्वजनिककार्येषु कुतूहलं कर्तुं पर्याप्ता शरीरस्थितिरुत्तमा बभूव॥

## एकोनत्रिंशोऽध्यायः

# 'रोलेट'शासनमपि च मम धर्मसंकटम्

**'माथेरान'स्थलं** गत्वा देहस्वास्थ्यं शीघ्रमेव भविष्यतीति सुहृदो वैद्याश्च दार्ढ्येनाब्रुवन्। तस्मादहं तत्र गतः। किंतु तत्रत्यमुदकमतीवलवणमयमासीत्। अतो ममावस्थितिस्तत्र बहुकष्टतराभवत्। आमशंकाबाधया ममातनद्वारं बहुसूक्ष्मतया तत्र विदरवशान्मलविसर्जनकाले तीव्रयातना समभवत्। अत आहारजिग्रहीषोर्भयमुत्पेदे। एकसप्ताहात्पूर्वमेव मया 'माथेरान' स्थानं परित्यज्य गंतव्यमापतितम्। अद्यः शंकरलालबेंकरमहाशयो ममारोग्यशिक्षणभारमुवाह। डॉ. दलालमहाशयस्याशयः प्रष्टव्य इति निरबध्नात्। तदनुसारेण डॉ. दलालमहाशय आहूतः समागतः। एकस्मिन्नेव क्षणे मनोनिर्धारणशक्तिस्तदीया मम मानसमाचकर्ष। व्रणस्य तत्क्षणमेव शस्त्रचिकित्सा कर्तव्येति स ऐच्छत्। तथास्त्वित्यहमुक्तवान्। मम प्रकोष्ठ एव तत्कर्तुं न कोऽप्यन्तरायासीत्। परेद्युरेव तत्संवृत्तम्। तेन पूर्णसाफल्यमप्यलभ्यत॥

किंतु तावता तस्य तृप्तिर्नासीत्। दुग्धसेवनं विना भवतो देहस्थितिः पूर्ववन्न भविष्यतीत्यब्रवीत्। तेन सह शंखपाषाणस्य लोहस्य च 'सोमल' नामकौषधस्यांतःक्षेपणेन भवतः शरीरं सुदृढं भवतीति दृढप्रत्ययं ब्रवीमि इत्यसावब्रवीत्॥

अंतक्षेपणं त्वावद्दीयताम्। परंतु दुग्धस्य विषयोऽन्यः। तन्न पास्यामीति प्रतिज्ञातं मयेति प्रत्युत्तरमदाम्॥

भवत्प्रतिज्ञा कीदृशीति वैद्यः पप्रच्छ। तस्य तत्कथामशेषां मम प्रतिज्ञाकारणानि च न्यवेदयम्। दोहनकाले गोमहिषीणां चित्रहिंसां कुर्वन्तीति यदा ज्ञातं तदारभ्य दुग्धमसह्यमासीत्।

अधिकं च दुग्धं मनुष्यस्य सहज आहारो न भवतीत्यभिप्रेतत्वाद्दुग्धं मया संपूर्णमेव परित्यक्तमिति च मया विवृतमासीत् । तर्ह्यजाया दुग्धं पातुं भवतः कोऽप्यंतरायो न स्यादित्यब्रवीत् ॥

वैद्योऽप्येतदनुसृत्य भवताजादुग्धपानेनाप्यलम् । मत्कार्यं चलतीत्युवाच ॥

अहं पराजितः सत्याग्रहं युद्धं कर्तुमासक्तिर्मम जीवितुमाशामुदयत् । अतोऽहं प्रतिज्ञायाः सारभूतांशस्य तिलांजलिं प्रदाय तामक्षरशः पालयित्वा तृप्तोऽभवम् । यतो यदा मया प्रतिज्ञा कृता तदा मम मनसि गोमहिष्यः केवलमासन् । तथापि सहजार्थे इतरप्राणिनां दुग्धमपि मिलितमासीत् । तदपि मुक्त्वा दुग्धं मनुष्यस्य नैसर्गिकाहारो न भवतीति यावदभिप्रायो वर्तते तावद्दुग्धसेवनं मम नासीद्धर्मः । यद्यप्येतत् सर्वं मे विदितं तथाप्यजाक्षीरपानाय संमतिर्दत्ता । जीवितुमाशा सत्योपासनां निरर्थकामकरोत् । सत्याग्रहयुद्धं करणीयमित्युत्सुकः सत्योपासक एकदा स्वीयादर्शस्य कलंकमानिनाय । एतत्कार्यस्य स्मरणमद्यापि मम हृदये निगूढं मम पश्चात्तापं जनयति । अजाक्षीरपरित्यागायोपायं सदालोचयामि । परंत्वद्यापि मां ग्रसमानसूक्ष्ममोहेन सेवा करणेच्छया नाहमद्यापि पारं गन्तुं शक्तः ॥

आहारविषये मम प्रयासाः मयांगीकृता हिंसातत्त्वशोधनकार्ये एको भागो भवतीति मम प्रियाः सन्ति । तैरहं विनोदमानंदं च लभे । परंत्वद्य मयाजाक्षीरोपयोगोऽहिंसादृश्यापेक्षयाधिकं सत्यदृष्ट्या प्रतिज्ञाभंगदृष्ट्या तु मां बाधते । अहिंसातत्त्वादपि सम्यक्तरां सत्यस्यादर्शो ज्ञात इति प्रतिभाति । सत्यस्योपरितनग्रहणे मुक्ते सत्यहिंसामहमिमां न कदापि पूरयितुं शक्त इत्यनुभवः प्राह । प्रतिज्ञाः किल न केवलमक्षरशः परमार्थतश्च पूरणीया इति सत्योपासनाया नियमः । प्रकृतसंदर्भेऽहं मम प्रतिज्ञाया बाह्यरूपस्य केवलं मूल्यमास्थाय तस्यात्मानमर्थं व्यनाशयम् । मम हृदयं तापयते तदेव । परंतु यद्यपि मे एतत्स्पष्टज्ञानमस्ति तथाप्यग्रेतनो मार्गो मम न दृश्यते । एवं चेत्प्रायशो मम समीचीनमार्गे गन्तुं न धैर्यमस्ति । तदुभयस्याप्यर्थः सम्यग्दृष्ट्यैक एव । यतः संशयस्यानन्यमूलोऽल्पश्रद्धाथवा श्रद्धाभावः । अतो भगवन्मम श्रद्धां देहीति रात्रिंदिवं मम प्रार्थना ॥

इतः शीघ्रमेव मयाजाक्षीरपानमुपक्रांतम् । डॉ. दलालमहाशयो ममोपरि छिद्रस्य चिकित्सां चकार । यदाहं स्वस्थोऽभवं तदा जीवितुमभिलाषः समुत्पन्नः । यतो भगवान् विशेषतो मम कार्यं निक्षिप्तवान् ॥

मम स्वास्थ्यप्राप्तेः काल एव वृत्तपत्रिकासु प्रकटीकृतं 'रोलेट'समितेरावेदनमकस्मान्मम चक्षुरागतम् । तत्समितेः सूचनां दृष्ट्वाहं कंपितः । श्रीवल्लभभाईमहाशयः प्रायशः प्रतिदिनमागत्य मां दृष्ट्वा गच्छति स्म । अस्य मम भीतिसंशयान् व्यक्तीकृत्यास्य किमपि कर्तव्यमित्यवोचम् । आधुनिकपरिस्थितौ किमस्माभिः कर्तुं शक्यमित्यसौ पप्रच्छ । मया प्रत्युक्तं यथा – पर्यवस्थानकर्तारः स्वल्पा जना मिलिता अप्यलम् । इदमलक्षयित्वा समितेराशयानुरोधेन शासने निर्मिते सति

सत्याग्रहः करणीयः । अहमेवं रुग्णशयितो नाभवं यदि एक एव प्रत्यवस्थायेतरे च मामनुसरिष्यन्तीति निरीक्षमाणः स्थितः स्याम् । किंतु ममाधुनिकनिरुपायस्थितौ एतत्कार्यानुष्ठानाय मम शक्तिरेव नास्तीति प्रतिभातीति ॥

एतद्वादानुवादफलत्वेन मम परिचितैश्चतुःषष्टजनैर्युता सभाह्वातव्येति निर्धारितमासीत् । 'रोलेट'समितेराख्यानेषु प्रकटीभूतसाक्ष्यमाश्रित्य समितेराशया न तिष्ठन्तीति ममाभिमतमासीत् । आत्मगौरवयुक्तो जनो न कोऽपि तदनुसर्तुं शक्यमिति मम प्रत्यभात् ॥

पर्यंते सभाश्रमे मिलिता । विंशतिजना अपि तत्र नाहूताः । यावदहं स्मरामि श्रीवल्लभभाईमहाशयं मुक्त्वा तत्रागता जनाः श्रीमतीसरोजिनीनाईडुमहाशया—होर्नीमनमहाशयो-दिवंगत-उमरसुबानी—श्रीशंकरलालबैंकरमहाशयोऽपि च श्रीअनसूयाबाईमहाशया बभूवुः । सत्याग्रह-प्रतिज्ञा सभायामेव सिद्धाभूत् ॥

तत्रत्यैः सर्वैरपि स्वस्वहस्ताक्षरी कृतं पत्रमिति मम स्मृतिरायाति । तदानीं मया न कापि पत्रिका चाल्यते स्म । तदा तदा दैनिकपत्रिकासु ममाभिप्रायाः प्रकाश्यन्ते स्म । इयं पद्धतिरद्याप्यंगीकृता । श्रीशंकरलालबैंकरमहाशयोऽस्मिन् संदर्भेऽत्यंतश्रद्धामुवाह । कार्यक्रमं सुव्यवस्थया सर्वदा कर्तुं तस्यासाधारणशक्तेर्ज्ञानं ममास्मिन्नेव संदर्भे प्रथमतः समुत्पन्नम् ॥

तात्कालिकी संस्था सत्याग्रहसदृशं नवीनमायुधमुपयोक्तुमंगीकरोतीत्याशा निराधारेति मम प्रत्यभात् । अतो मम सूचनामनुसृत्य सत्याग्रहसभेति प्रत्येकसंस्थैका स्थापिताभूत् । तस्याः प्रमुख-सदस्या मोहमयीवर्तिन इत्यतस्तस्याः केंद्रं मोहमय्यामेव स्थितम् । प्रतिज्ञापत्रं बहवो जना हस्ताक्षरीकर्तुमुपक्रांताः । प्रसिद्धपत्रिका निरगुः । जनस्य सभा मिलिताः । सर्वमेतदालोक्य मम 'खेडा' संग्रामस्य सामान्यलक्षणानि सर्वाणि स्मृतिमायान्ति स्म ॥

अहं सत्याग्रहसभाया अध्यक्षोऽभवम् । एतत्सभावर्तिनां सुशिक्षितानां वर्गस्य मम चैकमत्यसंभवोऽत्यल्प इति मम शीघ्रमेव विदितमासीत् । सभाकूटेषु गुजरातीभाषया वक्तव्यमिति मम हठो विचित्रं दृश्यमान इतरकार्यपद्धतयश्च तानविशेषतश्चिंतायामाकुलत्वे च पातयामासुः । परंतु त औदार्येण मम वैपरीत्यानि सेहिरे इति मया संमंतव्यम् ॥

तथापि सभा बहुकालं न जीवेदिति प्रथमतः स्पष्टं प्रतिभाति स्म । सत्याहिंसानां प्राधान्यं मया प्रतिपाद्यमतं तदानीमेव कतिपयानामप्रियमित्येतन्मम दृष्टिमागतम् । एवं स्थितेऽपि प्रारंभेऽस्मत्कार्यमतिरभसेन प्रबलं बभूव ॥

मम योग्यताविशेषद्वये द्वितीयो विषयो लेखनम्। यः कोऽपि वा विषयोऽस्तु । तस्य संक्षेपेण व्यक्तीकरणशक्तिर्मय्यासीदिति महासभाप्रमुखानामवधाने स्थितम्। अयं गुणश्चिरकालाभ्यासेन संपादितस्तदानीं महासभाया अंगविधानं गोखलेमहाशयेन निर्मितमासीत्। तैर्विरचितकतिपयसूत्राणामाधारेण महासभायंत्रं चलति स्म । एषां सूत्राणामुद्भवस्य सुकुतूहलमितिहासमहं गोखलेमुखादेवाशृणवम्। परंतु महासभायाः कार्यकलापो वर्षे वर्षे वर्धमान इतीमानि सूत्राण्यसमर्पकाणि बभूवुरिति सर्वेषां प्रतिभाति स्म। अयं प्रश्न : प्रतिवर्षं चर्चास्पदं भवति स्म। तदानीं महासभाया अधिवेशनेषु कार्यव्यवस्था वा वर्षमध्ये संभवनीयानिरीक्षितसंनिवेशानां पर्याप्तकार्यक्रमं निर्धारयितुं संविधानं वा नासीत् । तदानीं विद्यमाननियमाननुसृत्य त्रयाणां कार्यदर्शिनां स्थानमासीत् । एषामप्येक एव वस्तुतः कार्यं करोति स्म। अयमेकोऽपि वर्षपूर्णं कार्यं न चक्रे। तेऽन्यसहायं विना महासभायाः कार्यं चालयद्भिः पुरस्तादालोचयद्भिः पूर्वं महासभाया वोढ पर्यनुयोज्यतां वर्तमानसंवत्सरे निर्वाहयितुं कथं साध्यम्। तस्मिन्वर्षेऽयं प्रश्न इतोप्यधिकमहत्वमाप्नोतीति सर्वैर्निरीक्षितम् । सार्वजनिकविचारांश्चर्चयितुं महासभात्यगाधासीत्। महासभायाः सदस्या इयंत इति वा ईदृगीदक्प्रांतेनैतावदेतावज्जनप्रतिनिधयः प्रेक्षणीया इति वा नियमो नासीत्। एवंस्थितामनायकपरिस्थितिमुत्तमां कर्तुं किमपि संविधानमावश्यकमिति सर्वेषां दृश्यते स्म। अहं महासभाया व्यवस्थाक्रमं रचयितुं संमतिमदाम् । एकं नियममनुरुध्य तदेतद्यथा जनानामुपर्यत्यंतप्रभावशालिनौ नायकौ द्वौ लोकमान्य-देशबंधुमहाशयाविति दृष्टम्। जनतापक्षे तौ द्वावप्यंगविधानरचनासमितौ मया सह सदस्यौ भवतामिति प्रार्थितवान्। परंतु तावेतौ व्यक्तितो रचनाभागिनौ भवितुमसाध्यमिति स्पष्टमासीत्। अतस्तौ मुक्त्वा तद्विश्वासपात्रौ द्वौ मया सह समितेर्नियोक्तव्यावस्यां च समितौ केवलं त्रिभिरेव भवितव्यमित्यहमसूचयम्। अस्य दिवंगतलोकमान्यदिवंगतदेशबंधुमहाशयौ संमतिं ददतुः। लोकमान्यमहाशयः स्वपक्षीय श्री. केलकरमहाशयं देशबंधुमहाशयश्च आई. बी. सेनमहाशयं न्ययोजयताम्। समितेः सदस्यानां सकृदपि संमिलितुं न शक्यमासीत्। परंतु पत्रव्यवहारेण परस्परमभिप्रायान् वेदितुं साध्यमासीत्। पर्यंतेऽस्माभिरैकमत्याख्यानं समर्पितम् । ममास्मिन् व्यवस्थाक्रमे किंचिदभिमानोऽस्ति। तच्चेत् संपूर्णं कार्यरंगेऽवतारितं तदास्माकं स्वराज्यं लप्स्यत इति मेऽभिप्रायः। यस्माद्दिनादियं पर्यनुयोज्यता मया वोढा ततो मे वास्तविको महासभाप्रवेश इति वक्तुं शक्यम्॥

नवत्रिंशोऽध्यायः

# 'खादी' जन्म

अथोत्तरैकोनविंशतिसहस्रतमे वर्षे हिन्दुस्वराज्यपत्रे भारतदेशस्य वर्धमानदारिद्र्यरोगस्य सर्वरोगापहारकमौषधमिति यमवर्णयं स वायदंडः 'चरखो' वा मया दृष्ट इति न स्मरामि। तस्मिन् पुस्तके मयैतदवगतं यद्यद्देशस्य निष्पेषकं दारिद्र्यमपसारयितुं साहाय्यं करोति तत्तदेव स्वराज्यस्थापनं करोतीति। पंचदशोत्तरैकोनविंशतिसहस्रतमे वर्षे दक्षिणाफ्रिकादेशतोऽहं पश्चाद्वृत्तः। तदा मया वस्तुतः'चरखो' न दृष्टः। साबरमत्यां सत्याग्रहाश्रमनिर्माणकाले कतिपयान् वायदंडान् वयं प्रावेशयाम। तत्प्रवेशनादनंतरमेव प्रातिकूल्यमुत्थितम्। सर्वे वयमुदारवृत्तिग्राहिणोऽथवा कार्यपराः। नैकोऽप्यस्माकं शिल्पी बभूव। वायदंडेषु कार्यकरणात्पूर्वमस्माकमेको वयनकुशलो वयनं शिक्षयितुमावश्यक आसीत्। पर्यंते पालनपुरग्रामादेको लब्धः। किंतु तस्य सर्वं शिल्पिज्ञानमस्माकं न ददौ। परंतु मगनलालगांधिमहाशयः शीघ्रमेव निराशो न संवृत्तः। शिल्पयंत्रकार्ये स्वभावतः समर्थोऽचिराच्छिल्पविद्यामग्रहीत्। अपि चैकैकशः कतिपयनूतनवायकाः शिक्षिता आश्रमे। स्वहस्तनिर्मितवस्त्रेणात्मानं वासयितुं शक्यं यथाःस्यात्तथा भवितुमस्माकमुद्देश आसीत्। अतो वयं तत्क्षणमेव यंत्रनिर्मितवस्त्राणि परित्यज्याश्रमस्य सर्वे जना स्वदेशीयसूत्रैर्निर्मितानि वस्त्राण्येव धारयितुं निश्चिता बभूवुः। एतदभ्यासस्वीकारो महान्तमनुभवमानिनाय। वायकानां जीवितनियमान् साक्षात्संपर्केणावगन्तुं शक्तानकरोत्। अपि चोत्पन्नस्य प्रमाणं सूत्रसंपादनमार्गे स्थितानंतरायान् वंचनाग्रस्ताःभवितुं मार्गोऽपि च पर्यन्ते सर्वदा वर्धमानं ऋणित्वं एतत्सर्वं ज्ञातुं शक्तांश्चकार। यावदस्माकमावश्यकं तावत्सर्वं लब्धुं न समर्था अभूम। अतोऽवशिष्टः पक्षो हस्तवेमस्तंतुवायाद्वस्त्रं संभरणीयम्। परंतुःसज्जस्थितवस्त्रं भारतीययंत्रसूत्रनिर्मितवस्त्रविक्रयिभ्यो वा तंतुवायेभ्यो वा लब्धुं न सुकरम्। तंतुवायैर्निर्मितं वस्त्रं सर्वं समीचीनं विदेशीयसूत्रादेव। यतो भारतीययंत्राणि तर्कुद्वारेण तंतून्न चक्रुः। अद्यापि यंत्राणामुत्पादनमत्यल्पं स्वदेशीयसूत्राणां तंतुवायान् पर्यन्ते महता प्रयत्नेन लब्धुमशक्नुम। नियमस्तु तैरुत्पादितं सर्वमस्मद्धारणवस्त्राणामिति यंत्रनिर्मितसूत्राणां वस्त्रस्वीकारेण सुहृदां च मध्ये प्रसारणेन भारतीयसूत्रकरणयंत्राणामैच्छिकप्रतिनिधीभूताः। एतद्यंत्रैः सह संपर्कमजनयत्। तेन तेषां कार्यसंविधानं कार्यप्रत्यूहांश्च ज्ञातुमवकाशो लब्धः। यंत्राणामुद्देशो निर्मितसूत्रेण तंतुवायानधिकाधिकं कर्तुमासीत्। हस्तवेमतंतुवायैस्तेषां सहकारः यथेप्सितो नासीत्। किंत्वपरिहार्योऽनित्यश्च। अस्मत्स्वकीयसूत्रस्य तांतवकरणे वयमातुराः स्थिताः। यावद्वयमेतत् कर्तुमवस्थितास्तावद्यंत्राणामालंबनं स्थास्यतीति स्पष्टम्। भारतीययंत्राणां प्रतिनिधीभूय देशसेवां कर्तुं समर्था भवेमेति नान्वभूम॥

संकटानां परंपरा ददृशे । तांतवचक्रं वा तंतुवायान् वा कथं तांतवं करणीयमिति शिक्षयितुमलभेमहि । आश्रमे वयं कतिपयराटानुपायोजयाम । किंत्वेतान् 'चरखा' रूपेणोपयोक्तुं साध्यमिति कल्पनैवास्माकं नासीत् । एकस्मिन् दिने कालिदासवकीलमहाशयः कथं तांतवं करणीयमिति प्रदर्शयन्तीं स्त्रियं दृष्टवानहमिति न्यवेदयत् । नूतनविषयाणां सौलभ्येन शिक्षणे प्रवीण इति ज्ञातमेकमस्मदाश्रमादस्याः पार्श्वं प्राहैष्म । किंतु सोऽप्येतत्कलाममर्माण्यवशीकृत्य प्रतिनिवृत्तः ॥

इत्थं कालोऽपयातः । एतेन सह ममौत्सुक्यमपि वर्धमानमासीत् । अकस्मादाश्रमगतानस्मिन्विषये एतेभ्यः किमपि ज्ञातेन न भाव्यमिति तांतवं प्रतिष्ठव्यमासीत् । किं तु कलायां स्त्रियः केवलमभ्यस्यन्ति स्म । तास्वपि सान्तिमावस्थामागता । देशस्य क्वचिदपि कोणे एका द्वौ वा स्थितौ यदि तानन्वेषयितुं स्त्रिय एवापेक्ष्यन्त ॥

सप्तदशोत्तरैकोनविंशे वर्षे भरूचपत्तने संवृत्तशिक्षणपरिषदध्यक्षो भवितुं सुहृदस्तत्र मामनैषुः । तत्रैवाहं तां महासाहसिनीं गंगाबाईमहाशयामदर्शम् । सा विधवा । तथापि तस्याः साहसं निरवधिकमासीत् । सामान्यगणनया सा यद्यपि तावच्छिक्षिता नासीत्तथापि धैर्ये ज्ञाने च सास्मत्सुशिक्षितस्त्रीजनमतीवातिक्रांता । सा न केवलमस्पृश्यताकलंकं परित्यक्तवती परं निर्भयेनास्पृश्यैर्मिलित्वा तत्सेवामकरोत् । तस्याः स्वीयं विषयमासीत् । यदस्या आवश्यकं तदत्यल्पम् । सा सुघटितशरीरा सहचरं विना सर्वत्र संचारं करोति स्म । अश्वारोहणं नाम तस्याः सामान्यम् । गोधरानगरे संवृत्तपरिषदि मम तया सह गाढः परिचयोऽभूत् । 'चरखा' संबंधे मम दुःखमस्य न्यवेदयम् । अहं राटं परिशोधयितुं निरंतरं प्रयतिष्य इत्युक्त्वा सा मम भारमल्पीचकार ॥

## चत्वारिंशोऽध्यायः

# पर्यंते लब्धम्

**अनेकदिनानि** गुजरातदेशे पर्यट्य गायकवाडसंस्थानवर्तिनि विजापुरनामके ग्रामे गंगाबाईमहाशया पर्यन्ते 'चरखम्' लेभे । तत्रानेकजनानां समीपे 'चरखा' बभूवुः । परंतु बहो कालात् पूर्वमेव सर्वं कच्चरमित्युपरिकोष्ठेषु प्राक्षिपन् । यदि कश्चिदस्माकमनारतं तूलपिंडान् दद्याद्यदि च वीततांतवं क्रीणीयात्तदा वयं पुनस्तांतवाय सिद्धाः स्म इति गंगाबाईमहाशयामब्रुवन् । इमं संतोषवृत्तांतं गंगाबाईमहाशया मह्यं न्यवेदयत् । तूलपिंडसंभृतिर्दुष्करा प्रत्यभात् । अहमेतत्कष्टं दिवंगत-उमरसुबानीमहाशयं न्यवेदयम् । स च स्वीययंत्रात् प्रेषयिष्यामीति प्रतिपद्यातंकमेकं पर्यहार्षीत् । सुबानीमहाशयाल्लब्धांस्तूलपिंडान् गंगाबाईमहाशयायै प्राहैषम् । अल्पेनैव कालेन

सूत्रमागंतुमुपाक्रमत् । अस्य प्रवाहः कियत् त्वरित आसीदिति चेत्त निर्वोढुं मे एका समस्या बभूव ॥

उमरसुबानीमहाशयस्यौदार्यं तावदगाधमासीत् । परंतु तेनापरिमितं प्रयोजनं लब्धुं नोचितमासीत् । सर्वदा तन्मूलकं तूलपिंडानामानयनं मम मनःसंकोचस्य कारणमभूत् । एतदधिकं यंत्रनिर्मिततूलपिंडानुपयोक्तुमेव प्रथमतो दोष इति मम भासते स्म। यत्रनिर्मिततूलपिंडानुपयोजयेद्यदि यंत्रनिर्मितसूत्रं कस्मान्नोपयोजयेत् । अस्मत्पूर्विकाणां न कुतश्चिद्यंत्रात्तूलपिंडा लभ्यन्ते स्म । एवं चेत्ते तूलपिंडान् कथं कुर्वन्ति स्म । मम मनस्येवंविचारेषु सत्सु तूलपिंडप्रापका ऊर्णामार्जका अन्वेषणीया इति गंगाबाईमहाशयाया असूचयम् । सा सविश्वासं कार्यं स्वीचकार । सा ऊर्णामार्जकं तूलमार्जने सज्जीकृतं नियोजयामास । सा च प्रतिमासं पंचत्रिंशद्रूप्यकाणां तदधिकं वा वेतनममार्गत् । अहं तत्काले यद्वा तद्वा मूल्यमस्तु तदधिकमिति नैवागणयम् । संमृष्टतूलात् तूलपिंडं कर्तुं सा कतिपयबालकानशिक्षयत् । अहं मोहमय्यां तूलार्थे भिक्षामयाचे । श्री यशवंतप्रसाददेसाईमहाशयस्तत्क्षणमिमं भारमुवाह । एवं गंगाबाईमहाशयायाः साहसं निरीक्षितादधिकं प्रवृद्धम् । विजापुरग्रामे वीतसूत्रस्य वयनाय जनमन्वैषयत् । शीघ्रमेव विजापुर 'खादी' प्रसिद्धमभूत् ॥

एतेषु सर्वेषूद्यमेषु विजापुरे निर्वृत्ते आश्रमे 'चरखो' त्वरितगत्या प्रमुखस्थानं लेभे । स्वस्य सहजां यंत्रनिर्माणशक्तिं सर्वामुपयुज्य मगनलालगांधिमहाशयस्तांतवचक्रमनेकविधयोत्तमं चकार । चक्राणि तत्सहायकेतरसामग्री चाश्रमे सिद्धानि भवितुमुपचक्रमिरे । आश्रमे प्रथमतो निर्मित 'खाद्या' 'गजस्य' सप्तदशाणका मौल्यमासीत् । एतदतिस्थूल 'खादी' तन्मूल्येन क्रेतव्यमिति मित्राणां वक्तुं न विकल्पितं मया ॥

अहं मोहमय्यां रुग्ण आसम् । तथापि मम तत्र चक्रमन्वेषयितुं पर्याप्तं चैतन्यमासीत् । पर्यन्ते द्वौ सूत्रकारौ मम चक्षुःपथमागतौ । तौ एक 'सेर' चतुर्विंशति 'तोलानि' अथवा प्रायः $\frac{3}{4}$ 'पौंड 'सूत्रस्यैकं रूप्यकं मौल्यमगृहीताम् । तदानीं मे 'खाद्या' अर्थशास्त्रं न विदितम् । तदानीं हस्तनिर्मितसूत्रं लब्धुं मूल्यं यद्वा तद्वा भवतु तदधिकमिति नाहमगणयम् । विजापुरग्रामे प्रचलितमूल्यं एतन्मूल्यं च तुलयित्वा परीक्ष्यमाणे मां वंचयन्ति स्मेति ज्ञातम् । ते सूत्रकाराः स्वीयमूल्यमल्पीकर्तुं न संमेनिरे । ततोऽहं तान् परित्यक्तवान् । किंतु तेभ्य उपयोगं विना नास्थीयत । ते श्रीमती अवंतिकाबाई-रमाबाईकामदार-महाशयाभ्यां श्रीशंकरलालबेंकरमहाशयस्य मातापि च श्रीमतीवसुमतीबाईमहाशयायै च सूत्रं शिक्षयामासुः । चक्रं मम प्रकोष्टे आनंदेन गातुमुपाक्रमत । अहं पुनरारोग्यस्थितिं प्राप्तुं तस्य मधुरसंगीतेन कृतसाहाय्यं नात्यल्पमिति उक्तिर्नातिशयिता । तस्य परिणामः शारीरिकापेक्षया मानसिकोऽधिकमासीदित्यंगीकरोमि । परंत्वेतन्मनुष्यस्य शरीरोपरि मानसिकपरिणामस्य प्रभावः कियानिति

व्यक्तीभवति । अहमपि चक्रस्य हस्तमाक्षिप्तवान् परंतु तत्कालेऽधिकं मया न कृतम् । पुनः मोहमय्यामपि सैव पुराणी समस्या । हस्तनिर्मिततांतवस्य संपादनं प्राप्तम् । प्रतिदिनमेकः तूलमार्जकः स्वधनुः ' ठैं ' इति शब्दयन् श्रीरेवाशंकरझवेरीमहाशयस्य गृहस्याग्रे गच्छति स्म । सा तस्मिन्नाह्वाय्य विचार्यमाणे शय्यापूरणाय कार्पासमार्जतीति विदितमासीत् । तूलपिंडं कर्तुं कार्पासमार्जनाय स संमेने । तेन मार्गिता भृतिरधिकासीत् । तथाप्यहं तद्दत्तवान् । एवं निर्मितसत्रं पवित्रैकादशीपूजार्थं मालिकां कर्तुं मम वैष्णवमित्रेभ्यः प्रादाम् । श्रीशिवजीमहाशयो मोहमयीनगरे एकां तांतवश्रेणीमुदघाटयत् । एभ्यः प्रयोगेभ्यो बहुधनं व्ययीकृतम् । किंतु तत्सर्वं ' खाद्यां ' विश्वासिनो देशभक्ताः सुहृदः संतोषेणोहुः । एवं व्ययीकृतं धनं न व्यर्थमासीदिति मम नम्राभिप्रायः । तेनास्माभिरमूल्योऽनुभवो लब्धः । 'चरख'स्य संभाव्योपयोगः स्पष्ट आसीत् ॥

इदानीमहं मम परिधानाय सर्वां ' खादी'मेवोपयोक्तुमातुरोऽभवम् । मम 'धोती' अद्यापि स्वदेशीयंत्रस्यैवासीत् । आश्रमे विजापुरग्रामे च निर्मीयमाण-' खाद्या ' विशालता त्रिंशदंगुलमात्रा बभूव । एतस्मिन्मासे पंचचत्वारिंशदंगुलखादी धोत्रं न लभ्यते चेदहं स्थूलां ' खादी ' धोतीमेव परिधास्य इति गंगाबाईमहाशयायै सूचनामदाम् । एतेन साकस्मात्त्रासिता तथापि मे प्रार्थना तद्योग्यतां नातिक्रान्ता । सा एकमासात्पूर्वमेवैकं धोत्रयुगलं ५० विशालं प्राहैषीत् । यद्येवं सा नाकरोत्तदा मम संनिवेशः कष्टोऽभविष्यत् । एतेन सा मामुद्धृतवती ॥

प्रायशोऽस्मिन्नेव समये श्रीलक्ष्मीदासमहाशयो ' रामजी'नामकतंतुवायं तस्य भार्यां गंगाबाईमहाशयां च ' लाठी' नामकग्रामादाश्रममानीयाश्रमे ' खादी'मवाययत् । ' खादी'प्रसार एतद्दंपतीभ्यां वोढं पात्रं नागण्यमासीत् । गुजरातदेशे तद्बहिश्च । बहूनामेतौ हस्ततांतवसूत्रस्य वयनं शिक्षयामासतुः । गंगाबाईमहाशयां वेमश्चालयन्तीमुपविष्टां द्रष्टुं विस्मयदृश्यमभूत् । निरक्षरापीयं स्वाधीनचित्तसहोदरी वेमश्चालयन्त्युपविष्टा चेत्तस्या मानसीदृष्टिस्तस्मिन्नेव लीना भवति । तदानीं तल्लक्ष्यमितरत्राक्रष्टुं दुष्करम् । वेमानं विहाय यथा तद्दृष्टिरितरत्र पतेत्तथाकर्तुमितोऽपि कष्टतरम् ॥

एकचत्वारिंशोऽध्यायः

# शिक्षाप्रदं संभाषणम्

**'खादी' प्रयुक्तः** क्षोभः (एषा स्वदेशीक्षोभ इत्याकार्यते स्म) प्रथमतः प्रारंभात्प्रभृति यंत्रस्वामिनां खंडनस्य टीकायाश्च लक्ष्योऽभूत्। उमरसुबानीमहाशयः (अयमेव दक्षो यंत्रस्वामी) स्वीयानुभवस्य परिज्ञानस्य च विषयान्ममाख्याति स्म। अपि च इतरयंत्रस्वामिनामभिप्रायानपि मह्यं निवेदयति स्म। एतेषामेकेन कृतो वादस्तन्मानसमग्रहीत्। मया गत्वा गृहस्थो द्रष्टव्य इत्यहं निर्बद्धः। मया संमतम्। सुबानीमहाशय आवयोः समागमाय संविधानमकरोत्। यंत्रस्वामी भाषितुमारभत। इतः पूर्वं स्वदेशीप्रगतिरासीदिति भवतो विदितं खलु। मम विदितम्॥

वंगविभजनकाले वयं यंत्रस्वामिनः स्वदेशीप्रगत्या पर्याप्तं लाभं निगीर्णवंतः। सा प्रगतिर्यदाऽत्युग्रासीत्तदा वयं वस्त्रमूल्यमधिकमकार्ष्म। इतरेऽपि हीनतराणि कार्याण्यकरवाम। एतदपि भवतो विदितं स्यात्॥

आम्। एते विषयाः किंचित् किंचिच्छ्रुताः। एतेन मम खेदः संजातः॥

भवतो यतः खेदस्तदर्थमहं जानामि। किंतु तस्य न किंचित्कारणं पश्यामः। अस्माभिर्व्यापारो न खलु जनोपकारबुद्ध्या क्रियते। लाभसंपादनायैव। अस्मत्'कंपनीनां' भागदारा अस्माभिस्तर्पणीयाः। पदार्थस्य मूल्यं मार्गणेन निश्चीयते। मार्गणकृतो यद्यधिका भवेयुस्तदा मूल्यं वर्धेतेति नियमस्य निरोधकाः के। स्वीयगतिप्रचारेण स्वदेशीवस्त्रस्य ग्रहीतॄणां संख्या वर्धेत यदि तन्मूल्यस्य वृद्धिर्निश्चितेति वंगानां विदितं भवेत्॥

तस्य वचनं निरुध्य मयोक्तं यथा—वंगा अहमिव विश्वसनीयस्वभावा आसन्। यंत्रस्वामिनः स्वदेशस्य विषमसंनिवेशे प्राप्ते वंचनामाश्रित्य विदेशीवस्त्रं स्वदेशीति विक्रेतुमुद्यताः स्वार्थपरा देशघातकाश्च न भविष्यन्तीति वंगा विश्वस्य स्थिता इति॥

भवान् विश्वासशील इति मम विदितमासीत्। अत एवाहं भवंतमत्रागंतुं क्लेशितवान्। सरलमानसा वंगा इव भवानपि प्रमादं न कुर्यादित्यवधानस्थापनाय भवंतं द्रष्टुमिष्टवान्॥

एवमुक्त्वायं पार्श्वस्थितं लेखकमाहूयास्य यंत्रे निर्मितवस्त्राणामादर्शान्प्रदर्शयेत्यवोचत्। तत्प्रदर्शयता तेनोक्तं यथा—इदं पश्यतु भवान्। इदं किलास्मद्यंत्रे नूतनतया निर्मितं प्रतिरूपमिदं सर्वत्र मृग्यते। अन्यवस्त्रेषु निर्मीयमानेष्वनुपयोजितसूत्रेण वयमिदं कुर्मः। अतः सहजतया तस्य मूल्यमल्पम्। वयमिदमुत्तरदिशि हिमाचलस्य कंदरपर्यंतं प्रहेष्यामः। देशे सर्वत्रास्मत्प्रतिनिधयः सन्ति। अतोऽस्माकं प्रतिनिधीनां लोपो नास्तीति स्पष्टं भवति। एतन्मुक्त्वा

हिन्दुस्थानस्यावश्यकवस्त्रापेक्षयात्र सज्जीभवद्वस्त्रमतीवाल्पमित्यवधातव्यम् । अतः स्वदेशीप्रश्न इति चेत्प्रधानतया वस्त्रसंपादनप्रश्न इति परिणमति । पर्याप्तं वस्त्राणि संपाद्य तस्य गुणमुत्तमं विधाय तत्क्षणमेव विदेशीवस्त्राणामागमनं स्वयमेव विरंस्यति । अतो मम सूचनेयती । इदानीं विद्यमानरीत्या स्वगतिप्रचारो निरोधनीयः । भवल्लक्ष्यं नूतनयंत्रकार्यस्थापने परिवर्त्यताम् । अस्माकं यदावश्यकं तत्पर्याप्तवस्त्रनिर्माणमेव । अस्मद्वस्तूनां ग्राहकापेक्षा न विद्यते ॥

पूर्वमेव मया तदेतत्कार्यं क्रियते चेद्यूयं मम प्रयत्नमाशिषा योजयथ खलु । इति पृष्टो मया किंचिदाश्चर्यभरितः प्राह यथा – कथमिदं साध्यम् । भवान्नूतनयंत्राणां स्थापनोद्यममालोचयतीति मन्ये । एवं चेद्भवानभिनंदनार्ह इति ॥

मया तन्न क्रियते । सूत्रनिर्माणचक्रस्य पुनरुज्जीवनप्रवृत्तोऽस्मीति मया विवृत्योक्तम् ॥

किमेतद्भवतोच्यते इति दिग्भ्रांतः पप्रच्छ ॥

अहं तस्य 'चरख' विचारं सर्वं मया दीर्घकालेनान्वेषणकथाजातमाख्याय पुनरुक्तं मया यथा भवत इव ममाप्यभिप्रायो विद्यते । अहं वस्तुतो यंत्राणां प्रतिनिधिर्भवितुं नेच्छामि । तेन न किंचित्प्रयोजनमस्तु । तेन देशस्य गुणापेक्षया दोष एव भविता । इतोऽपि बहुकालं यंत्राणां ग्राहकाल्पता न भविष्यति । हस्तसूत्रवस्त्राणां निर्माणाय व्यवस्थाय तद्विनियोगाय पर्याप्तमुपायमधिगंतुं मम कर्तव्यम् । अतः खाद्या उत्पत्तिमुद्दिश्य संपूर्णमवधानं मया दीयते । एतद्विधस्वदेश्यामस्ति मे परमो विश्वासः । यत एतद्वारा क्षुधार्तानामुद्योगशून्यानां स्त्रीणामुद्योगलाभो भवेत् । आभिः स्त्रीभिः सूत्रमुत्पाद्य ततो निर्मित 'खाद्या' हिन्दुस्थानजनानां वेषकल्पनं ममोद्देशः । अयमुद्यमः कियत् फलिष्यतीति वक्तुमशक्यम् । इदानीं तत्केवलमारंभदशायां वर्तते । किंतु मे तत्र संपूर्णविश्वासो विद्यते । यत्किंचिद्वा भवतु । तेनापकृतं न किमपि स्यात् । तथावलोकिते देशोत्पन्नवस्त्रमत्यल्पमपि देशस्य लाभ एव । एवमस्मदुपक्रमे भवदुक्तदोषाः केऽपि न सन्तीति स्पष्टमिति ॥

तेनोत्तरं दत्तं यथा – भवतो व्यवस्थापनाया देशवस्त्रोत्पत्तेर्वर्धनमेव भवदुद्देशश्चेन्मया तद्व्यतिरिक्तं ख्यातव्यं न किंचिदस्ति । एतन्नैसर्गिकबलचलिते यंत्रयुगे सूत्रचक्रप्रगतिः साध्येत्यन्यः प्रश्नः । अहं तावद्भवतो विजयमिच्छामि ॥

द्विचत्वारिंशोऽध्यायः

# प्रवाहोद्गमः

इतः 'खाद्या' अभिवृद्धिप्राप्तेर्विषये मयाधिकं न लिख्यते । मम विविधकार्यकलापानां लोकावधानागमनात्परं तेषां वृत्तांतलेखनमेषामध्यायानां नोचितम् स्यात् । तथा मया लेखनप्रयत्नोऽपि न शक्यः। यतः कारणांतरे सत्यपि तथा कर्तुमेको ग्रंथ एवापेक्ष्यते । मया सत्यसंबंधे प्रवर्तितशोधनेषु कतिपयविषयाः स्वयमेव मम लक्ष्यमागता इति वर्णनमात्राय एषामध्यायानां लेखनोद्देशः ॥

एवं चेदसहयोगप्रचारकथामग्रतो निरूपयिष्यामः । अलीभ्रातृभ्यां प्रवर्तितप्रचंडप्रचारे संपूर्णरभसेन चलिते सति एतद्विषयेऽहं विशेषतो मुसलमाना अहिंसानियमान् कियत्पर्यन्तमाचरितुं शक्नुवन्तीति विषयमुद्दिश्य दिवंगतमौलाना-अब्दुल-बार्यादिमहाशयैः सह उलेमाभिश्च चर्चामकरवम् । पर्यन्त एते सर्वेऽपि ऐकमत्येन इस्लामधर्मः धर्मेऽहिंसाव्यवहारनीतिरूपेणानुसरणं न निरोत्स्यनीति । तन्नीतिसंमतेरनंतरं तां वंचनां विना संपूर्णतया चालयितुं मुसलमाना बद्धा इति चाभिप्रायं ददुः । पर्यंतेऽसहयोगस्य निर्णयः खिलाफतसभायां निवेशितः । दीर्घचर्चानंतरं संमतिं प्राप । एकदालाहाबादनगर एका समितिरेतद्विषयमधिकृत्य सर्वां रात्रिं चर्चितमित्यहं स्पष्टं स्मरामि । प्रथमतो दिवंगतहकीमसाहेबमहाशयोऽहिंसात्मकोऽसहयोगः कार्यरंगे साध्यं न वेति संशेते स्म । संशयनिवृत्तेरनंतरमसहकारं पूर्णमनसा प्रविष्टः । तस्य साहाय्येन तस्यामूल्यलाभः संवृत्तः ॥

इतः स्वल्पेनैव कालेन मिलितायां गुजरातराजकीयपरिषद्यहमसहकारनिर्णयं सभाग्रे न्यवेशयम् । राष्ट्रमहासभायाः पूर्वमेव निर्णयमंगीकर्तुं प्रांतीयपरिषदो नाधिकार इति प्रतिपक्षस्य प्रथम आक्षेपः । अस्योत्तरं मया सूचितं यथा—अयं निर्बंधः पश्चाद्गमनाय न पुनरग्रे गन्तुमन्वेति । अग्रे गन्तुमधस्तनाधीनसंस्था न केवलं पूर्णाधिकारं प्राप्ताः परंतु स्वेष्वावश्यकं धैर्यं स्थैर्यमात्मविश्वासश्च यदि विद्येरंस्तदा प्रगतिमार्गानुसरणं तेषां कर्तव्यमिति । प्रधानसंस्था यद् गौरवं वर्धयितुं प्रयतनस्य परानुज्ञयावश्यकता नास्ति । तेन संभविष्यदपायस्य स्वयं विना प्रधानसंस्थायाः पर्यनुयोगो नास्तीति मया वादः कृतः । अनंतरं निर्णयस्य गुणदोषाणां चर्चा बभूव । अस्य विशेषांशा यथा चर्चायास्तीक्ष्णतापि च परस्परसहनेन गौरवेण च फलितं स्निग्धवातावरणम् । 'मत'सूचीनां गणनायां निर्णयोऽत्यधिकबहुमतेनांगीकृतोऽभूत् । इत्थमंगीकारे । श्रीवल्लभभाईमहाशयोऽपि च अब्बासतयबजी इति अनयोर्व्यक्तिप्रभावे नः प्राप्तसाहाय्यं नाल्पमासीत् । द्वितीयोऽध्यक्षः स्थितः । तत्स्वीयाभिप्रायपूर्णमेव निर्णयं परमेवासीत् ॥

एतं प्रश्नमधिकृत्यालोचयितुं विंशत्युत्तरैकोनविंशवर्षस्य 'सप्टेम्बर'मासे कलकत्तानगरेऽखिल-भारतराष्ट्रमहासभाया अधिवेशनविशेषं मेलयितुं महासभा समितिर्निरधारयत्। सज्जीकरणकार्यं महदासीत्। लालालजपतराय अध्यक्षः कृतः। मोहमयीतः कलकत्तानगरं प्रति 'कांग्रेस' अपि च 'खिलाफत' इत्येतयोर्विशिष्टा 'रैल'शकटीः प्रस्थापयन्। कलकत्तायां प्रतिनिधीनां प्रेक्षमाणानां च स्तोमो मिलितः मौलानाशौकतअलीमहाशयेन प्रार्थितोऽहं अग्निसंचालितशकट्यामसहकारनिर्णय मलिखम्। एतावत्पर्यंतमहमस्य संबद्धनिर्णयेष्वहिंसात्मक इति पदं प्रायशो न प्रयुक्तवान्। भाषणेषु स शब्दोऽवश्यमेवोपयुज्यते स्म। एतद्विषयकः शब्दकोशः पूर्णो नासीत्। अहिंसात्मकशांतिमय इति एतत् संस्कृतपदद्वारा मुसलमानकूटस्थनिवेदयितुमशक्यं प्रत्यभात्। अतोऽहमब्दुलकलाम्आझादमहाशयमेतदर्थप्रतिपादकं शब्दं सूचयितुमपृच्छम्। सोऽस्य 'बा-अमोन' इति शब्दमेतद्रीत्यासहकारस्य 'तर्के मवालत' इति पदं चासूचयत्॥

एवमद्यापि मयि 'हिंदी'-'गुजराती' अपि च 'उर्दू' इत्येतासु भाषास्वसहकारस्य संबद्धां शब्दसामग्रीमुपस्थापयितुं सज्जीभवति सत्येतदंतरे मिलंत्या महासभाया अधिवेशनेऽसहयोग-रचनाभारो ममोपर्यापतत्। मया पूर्वलिखितनिर्णयेऽहिंसात्मक इति वाक्परित्यक्तासीत्। इदं मम दृष्टिं नैवागतम्। निर्णयस्तथैव तस्यां शकट्यामेव प्रयाणं कुर्वतो मौलानाशौकतअलीमहाशयस्य वशे दत्त आसीत्। तद्रात्रौ मम अहिंसात्मक इति पदस्याभावोऽस्फुरत्। प्रातरहं महादेव-देसाईमहाशयं निर्णयस्य मुद्रणात्पूर्वमेवैतत्स्खलितं समीकृतं यथा स्यात्तथा कर्तव्यमिति प्राहैषम्। परंतु तथानुष्ठानात्पूर्वमेव मुद्रितमासीदिति स्मरामि। विषयनिर्धारकसमितिस्तद्दिने सायं मिलति स्म। अतो मुद्रितप्रतिलिपिः परिवर्तनीया आसीत्। निर्णयस्य शब्दरूपं न सज्जीकृतं चेद्बहुकष्टमभविष्यदिति मम पश्चाद्विदितमासीत्॥

तथापि मम स्थितिः करुणाजनका बभूव। निर्णयस्यानुमोदकाः के विरोद्धारः के इति नावगतं मया। लालाजीमहाशय एतत् कया रीत्या पश्यतीति न ज्ञातम्। संग्रामाणां शतेऽनुभवशालिनां वीरयोधानां गभीरव्यूहं कलकत्तानगरे योद्धुं सज्जीभूय स्थितमहमपश्यम्। डॉ. बेसंट-पं. मालवीयः-श्री विजयराघवाचार्यः-पं. मोतीलालमहाशयश्च केचिदेषामासन्॥

मम प्रस्तावे पंजाबदेशस्यात्याचारस्य खिलाफतवचनभंगस्य च चिकित्सायै केवलमसहयोगः प्रस्तावित आसीत्। परंतु तत् श्रीविजयराघवाचार्यस्य मनसः संमतं नासीत्। तेनैवं वादः कृतो यथा–असहयोगः प्रसारणीयश्चेत् सर्वव्यापकस्य महत्तमान्यायस्य संबंधे प्रसारणं विना एकद्वि अन्यायान् वृत्वा तावन्मात्रं किमिति प्रसारणीयम्। स्वराज्यस्याभाव एव राष्ट्रस्य सर्वाधिकारोऽन्यायः। अतः सहकारः स्वराज्यसाधनायैवोपयोक्तव्य इति। पंडितमोतीलालश्च स्वराज्यसाधनं निर्णयांतर्ग्रहीतुमैच्छत्। अहमेतमाशयं तत्क्षणमेव स्वीकृत्य स्वराज्यसाधनं निर्णये लिखितवान्। निर्णयस्य चर्चा समग्रतया पर्यनुयोज्यताबुद्ध्या प्रवृत्ता। वातावरणं किंचिदशांत-

मासीत् । चर्चानंतरं मम प्रस्तावोऽङ्गीकृतोऽभूत् ॥

असहकारं प्रथमतो मिलितः पंडितमोतीलालः । निर्णयमधिकृत्य तस्य मम च मध्ये संवृत्तः सुमधुरः संवादोऽद्यापि मम स्मृतौ वर्तते । तस्य शब्दानां विषये कतिचित्परिवर्तनान्यसूचयत् । मयापि तथैव परिवर्तितम् । देशबंधोमहाशयस्य प्रेरणाभारं स एवोवाह । देशबंधुमहाशयस्यांतः-करणं यद्यप्यसहयोगे स्थितं तस्य कार्यक्रममाचरितुं जनस्य योग्यतास्ति वा न वेति संशयग्रस्त आसीत् । असौ लालाजीमहाशयश्च संपूर्णमनसा स्वीकृतवंतौ नागपुरस्य महासभायामेव ॥

विशिष्टाधिवेशने लोकमान्यस्यानुपस्थितिभावो मम मनोऽतीव संकटेऽपातयत् । यदि लोकमान्यस्तदा जीवेत्स ममाशिषा योजयति स्मेति दृढविश्वासोऽस्ति । कदाचिदसावसहयोग-चलनवलनं विरुन्धुयात्तथापि तं विरोधं मम गौरवं शिक्षणं चेति परिगण्यते स्म । आवयोरुभ-योरपि सर्वदा मतभेदे सत्यपि कश्चिन्मनःकषायः संजातः । आवयोरुभयोः संबंधोऽत्यंतनिकट इति विश्वासं मय्युत्पादितवान् । अद्य मया वाक्येषु तेषु लिख्यमानेषु तन्मरणस्य संनिवेशो मन्नेत्रस्याग्रे तिष्ठति यदा मे सहयोगी पटवर्धनमहाशयो लोकमान्यस्य देहान्तवृत्तांतं 'फोन'द्वारा न्यवेदयत् । तदा प्रायः मध्यरात्र आसीत् ॥

मम सहचराः समंतादुपविष्टाः कंचित्प्रयत्नं विना स्वयमेव मम प्रबलतमं पृष्ठबलं मायामगादिति वाक्यं मम दुःखादुदभूत् । असहयोगचलनवलनं तदानीं पूर्णवेगेन चलति स्म । अहं लोकमान्यस्य प्रोत्साहं स्फूर्तिं चातुरेण प्रेक्षमाण आसम् । असहकारांदोलनस्यांतिमरूपस्य विषये तेषां मनोवृत्तिः कीदृशी भवति इत्येतत्केवलमभ्यूहवचनं तिष्ठति । परं तादृगूहा अन्यथा । तद् यद्वा तद्वा भवत्वेतावन्मात्रं निश्चितम् । तस्य मरणात्संभवदभावेन कलकत्तायां मिलितानां सर्वेषां मनः संकटे पातितम् । जनांगस्येतिहास एतद्विषममुहूर्ते प्राप्ते तस्य बुद्धिवादस्यानधिगमात् प्रत्येकः पुरुषो विषण्णोऽभूत् ॥

### त्रयश्चत्वारिंशोध्यायः

# नागपुरे

**कलकत्तानगरस्य** विशिष्टाधिनिवेशने स्वीकृतनिर्णयान्नागपुरमहासभाया वार्षिकाधिवेशनेन संमन्य स्थिरीकरणीयमासीत् । पुनः अत्रापि कलकत्तानगरे इव प्रेक्षकाणां प्रतिनिधीनां च प्रवाहः समापतत् । तदानीं महासभायाः प्रतिनिधीनां संख्या न परिमिता । अस्य फलं च यावदहं स्मरामि प्रतिनिधीनां संख्या चतुर्दशसाहस्रमारूढा । लालाजीमहाशयः शालानां बहिष्कारविषयेऽल्पपरिवर्तनं सूचयित्वा यतो निरबध्नात्ततः संमतिर्मे दत्ता । तथा च देशबंधुमहाशयस्य सूचनायाः प्रकारेण केषांचित्परिवर्तनानंतरमसहकारप्रस्ताव ऐकमत्येनांगीकृत आसीत् ॥

महासभाया व्यवस्थाक्रमस्य प्रतिपरिशीलनं प्रकृत्य यो निर्णयः सोऽप्यस्मिन्नेवाधिवेशने चर्चास्पदीकृतमासीत्। उपसमित्या सूचितो निर्णयः कलकत्तानगराधिवेशन एव महासभाया अग्रे स्थापितः। अतस्तद्विषयेऽभिप्रायप्रकटनं चर्चा च संपूर्णतया प्रवृत्तम्। यदा नागपुरस्याधिवेशने एतदंतिमनिर्णयायागतं तदा श्रीविजयराघवाचार्योऽध्यक्षोऽभूत्। विषयनिर्धारकसमितिर्निर्णयमेषा एकेनैव मुख्यपरिवर्तनेन स्वीचकार। मया लिखितनिर्णये प्रतिनिधीनां संख्या पंचशतोत्तर-साहस्रमासीत्। विषयनिर्धारकसमितिरेतत् षट्साहस्रमिति परिवर्तयामास। एष साहसेन कृतो निर्णय इति मम गणना। एतेषु वर्षेषु मम सर्वोऽनुभवो ममैतमभिप्रायं स्थिरीकरोति। प्रतिनिधिष्व-धिकसंख्याकेषु कार्यनिर्वाहस्य साहाय्यं भवतीति वैतत्प्रजाप्रभुत्वतत्त्वं रक्षतीति वा विश्वासः केवलं भ्रांतिरेवेत्यहं ब्रवीमि। यथा कथं वा भवत्विति परिगृहीते फले सपदि पर्यनुयोगशून्यजनापेक्षया प्रजाहितरक्षका विशालमानसाः सत्यशीलाश्च पंचदशशत-प्रतिनिधयेऽतीवोत्तमाः प्रजातंत्ररक्षका भवन्ति। प्रजातंत्ररक्षणाय जनेषु प्रखरस्वातंत्र्येच्छा स्वाभिमान ऐक्यभावश्च भवितुमर्हन्ति। अपरं च ते सत्यशीलान् प्रामाणिकानेव स्वप्रतिनिधीन् वरितुं कंकणबद्धा भवितुमर्हंति। परंतु विषयनिर्धारकसमितेः संख्या भ्रमेण ग्रस्ततया तस्याः षट्सहस्रमतिक्रम्य गन्तुमपि इष्टमासीत्। तथा च संमतः स्वस्मात् किंचिन्निवर्तनेन ॥

महासभाया ध्येयमधिकृत्य विशेषतश्चर्चा संवृत्ता। मया महासभायां समर्पितव्यवस्था-क्रमाख्याने ध्येयं शक्यं चेत् ब्रिटिशचक्राधिपत्यस्यांतो नो चेत्तद्बहिः स्वराज्यं साधनीयमित्यासीत्। महासभाया एकः पक्ष एतद्ध्येयं साम्राज्यस्यांतः स्वराज्यसाधनाय केवलं व्यवस्थापयितु-मैच्छत्। अस्य पक्षस्याभिप्रायान् पं. मालवीयजीमहाशयो झीणामहाशयश्च व्यक्तीचक्रतुः। तथापि ताभ्यामधिकमतसूचयो न लब्धाः। तस्मिन्नाख्याने स्वराज्यसाधनं च शांतवादेन न्यायवादेन भवितव्यमित्यासीत्। साधनमार्गो नियमैर्न नियंत्रयितव्य इति वादेनैतां प्रगतिं विरुद्धाः। परंतु एतद्विषयिणी चर्चा शिक्षाप्रदा निःसंकोचा च यदा प्रवृत्ता तदनंतरं महासभा मूलनिर्णय-मेवांगीचकार। एतद्व्यवस्थायंत्रं प्रजाभिः प्रामाणिकतया चातुर्येणोत्साहेन च चलितं चेत्तत्प्रजा-शिक्षणं प्रसारयितुं प्रबलसाधनं भवति स्म। अपि च कार्यनिर्वाह एवास्माकं स्वराज्यमानेष्यति स्मेति ममाभिप्रायः। परंत्वेतद्विषयमधिकृत्य चर्चयितुमप्रस्तुतं न भवति ॥

हिंदुमुसलमानानामैक्यमस्पृश्यतानिवारणं खादीप्रचार एतद्विषयानधिकृत्यास्मिन्नधि-निवेशने निर्णया अंगीकृता बभूवुः। तदाप्रभृति हिंदुसदस्या हिंदुधर्मेणास्पृश्यताकलंकं दूरीकर्तुं पर्यनुयोगतां स्वोपरि वहन्ति। अपि च महासभा भरतखंडस्य सजीवास्थिपंजरैः सह 'खादी'द्वारा चैतन्यदायकसंबंधं स्थापितवती। 'खिलाफत'मुद्दिश्यासहयोगाचरणं महासभायामंगीकृतं महत्कार्यरूपः प्रयत्न आसीत् ॥

# समाप्तिः

**एतानध्यायानन्तं** गमयितुं कालः प्राप्तः। इतःपरं मम जीवनं कियद्वहिरंगं जातमिति चेत्तत्र जनानामविदितोंऽशो नास्त्येवेति वक्तुं शक्यम्। अपरं चैकविंशत्यधिकोनविंशतिमिताद्वर्षात् प्रभृति राष्ट्रमहासभायाः प्रमुखैः सहात्यासन्नसंबंधेन कार्यस्य विहितत्वात्तदितो मम जीवमाने प्रवृत्तां काचिदपि संघटनां तत् संबंधमधिकृत्य लेखनं विना विवरीतुं न शक्यम्। यतः स्वामीश्रद्धानंदो देशबंधुमहाशयो हकीमसाहेबमहाशयोऽपि च लालजीमहाशयो यद्यप्येतेऽद्य न जीवन्ति तथाप्यस्मत्सुदैवेन महासभाया इतरयोधाग्रण्यैरस्माभिः सह कार्यं निर्वहंतो जीवन्ति। मयोपरि विवृतमहासुधारणाभ्योऽर्वाचीनं महासभाचरितमद्यापि न पक्कं भवति। अतो मया मम प्रयोगानितः परं च वर्णयितुमपक्रम्यते चेत् प्रमुखैः सह मम संबंधं न विवरीतुं न शक्यम्। एतदहं सद्य एवापि न कुर्यामौचित्यदृष्ट्या। चरमं कारणं चेदानीं मिलितानां प्रयोगाणां विषये मया कृतनिर्णयाः सुनिश्चिता इति वक्तुं न शक्यम्। अतो वृत्तांतमेतमत्र समापयितुं ममेष्टकर्तव्यं प्रतिभाति। किमेतावता मम लेखन्येव सहजज्ञा सती निश्चलतां प्राप्ता। पाठकाः परिहर्तव्या इति स्थितिमधिगतस्य मम संकटं नास्तीति न। मम प्रयोगाणामधिकं मूल्यमाधास्ये। तेषां योग्यतानुरूपं मया ते विवृता न वेति न जाने। विश्वासयोग्यं वृत्तातं लेखितुं यावच्छक्ति मया प्रयत्नः कृत इति ब्रूयाम्। यथा सत्यं मे दृष्टिगोचरो यथा येन मार्गेण तदद्राक्षं तत्सर्वं यथा तथा वर्णयितुमेव मम निरंतरप्रयत्नो भवति। एतेनाभ्यासेन ममानिर्वर्णनीया मनःशांतिरलभ्यत। यत एतेन संशयात्मनां सत्येऽहिंसायां च भक्तिरुदियादित्याशा ममोत्पन्ना॥

मम सर्वत्रानुभवे सत्यं विना न कोऽपि देवोऽस्तीति मनसि रूढं भवति। सत्यसाधनायाहिंसैक एव मार्ग इत्येतत्कथां प्रत्येकं पुटं न सारयेद्यदि मयैषा सर्वेषामप्यध्यायानां लेखनश्रमोऽपि व्यर्थ इति गणयामि। कदाचिदस्मिन् श्रमे निष्फले परिणमत्यपि तत्र कारणं मूलतत्त्वमहमेव। न पुनस्तत्तत्त्वमिति ज्ञायताम्। अहिंसां साधयितुं मे प्रयत्नाः श्रद्धान्विता यद्यपि तेऽपूर्णा अपक्वाश्च भवन्तीत्येव वक्तव्यम्। अस्माभिः प्रतिदिनं दृश्यमानस्य सूर्यस्य प्रभापेक्षया सत्यस्य तेजो दशलक्षाधिकं भवति तस्य प्रकाशो वर्णयितुमशक्यः। तस्य सहस्रकोटिकिरणेष्विदानीमेकस्तदानीमेक इति मम दृष्टिगोचरः संवृत्तः। अतः सत्यस्य निजकांतेः परिमाणमभ्यूहितुं न शक्यम्। वस्तुतो यन्मे दृष्टांतरहितं तत्तत्प्रचंडतेजोराशेर्मंदद्युतिर्भवति। परंतु मत्प्रयोगाणां फलितांशं प्रकल्प्यैतावन्मात्रविश्वासेन वक्तुं समर्थो यतः सत्यस्य पूर्णकांतेर्दर्शनात्पूर्वमहिंसा पूर्णरीत्या साधनीया॥

सर्वव्यापी सत्यनारायणः प्रत्यक्षीकर्तव्यो यद्येतज्जगतोऽतिहीनप्राणिनमप्यात्मवदनुरागेण द्रष्टुं योग्यो भवेत् । एतत्साधयितुमिच्छुर्जीवनस्य किमपि क्षेत्रं त्यक्तं न समर्थः । एतेनैव मम सत्योपासना मां राजकीयरंगमाचकर्ष । राजकारस्य धर्मस्य च नास्ति संबंध इति ये प्राहुस्ते धर्मः किमिति न जानन्तीत्यहं निःसंदेहं नम्रतया वक्तुं शक्नोमि ॥

आत्मशुद्धिं विना सकलप्राणिष्वप्यात्मीयतादर्शनमसाध्यम् । आत्मशुद्धिं विनाहिंसाचरणं नाम केवलं स्वप्न एव । यस्यांतः शुद्धिर्नास्ति स ईश्वरसाक्षात्कारं न कदाप्यधिगच्छेत् । अत आत्मशुद्धिस्तावज्जीवनस्य सकलक्षेत्रेष्वपि शुद्धतास्थापनमित्यदोषो भवितुमर्हति । शुद्धिरिति वेगेन प्रसरणस्वभावात आत्मशुद्धिरवश्यमेवापरशुद्धिं करिष्यति ॥

किंत्वात्मशुद्धेः पंथाः कठिनो दुरारोहश्च । संपूर्णशुद्धिसाधकः कायेन वाचा मनसापि निर्विकारो भवितुमर्हति । रागद्वेषौ नाम परस्परविरुद्धौ प्रवाहावतिक्रामेत् । अहं निरंतरप्रयत्नवानप्येषा त्रिमुखशुद्धिर्मया नार्जितेत्यहं जाने । अत एव जगतः प्रशंसा मां न संतोषयति । पुनर्दृष्टे तदनेकशो मनोव्यथां जनयति । शस्त्रयुद्धेन बाह्यप्रपंचविजयापेक्षयाग्राह्यौ सूक्ष्मगती रागद्वेषौ जेतुं दुःसाध्यं मे प्रतिभाति । मम भरतखंडं प्रति निवर्तनात्प्रभृति मदंतो निगूढशायिनावेतौ विकारौ ममानुभवमागतौ स्तः । अस्य ज्ञानेनाहं लज्जितोऽस्मि । न पुनर्हृदयभंगो जातः । एतेऽनुभवाः प्रयोगाश्च मम जीवितभारमपनिन्युः । अत्यानंदमजनयन् । किंत्वद्यापि ममाग्रतो दुर्गमो मार्गो विद्यत इति मया ज्ञातम् । मया शून्येन भवितव्यम् । स्वयं सर्वेभ्यो हीन इति स्वतंत्रबुद्ध्यावगमनपर्यंतं कस्यापि नास्ति मोक्षः । अहिंसा हि नम्रभावस्य चरमः सीमा ॥

इतः पाठकानामनुज्ञया एतद्वृत्तांतं तात्कालिकं वापि समापयिष्यामि । तैरनुज्ञापितोऽहमेवं विज्ञापये सत्यमूर्तिरीश्वरो मम कायेन वाचा मनसाहिंसावरं प्रदेयादिति प्रार्थनायां तेऽपि मया सह भागिनो भवन्त्विति ॥

इति श्रीगांधीमहात्मनः
सत्यशोधनाख्यायामात्मकथायां
पञ्चमो भागः
समाप्तः